॥ श्रीगणेशायनमः ॥ छन्दसांलक्षणंयेन श्रुतमात्रेणबुध्यते तमहंसम्प्रवक्ष्यामि श्रुतबोधमविस्तरम् १ संयुक्ताद्यंदीर्घं सानुस्वारंविसर्गसंमिश्रम् विज्ञेयमक्षरंगुरु पादांतस्थंविकल्पेन २ ॥ ॥

श्रीगणेशायनमः ॥ श्रीमत्सारस्वतंधाम नत्वास्तुत्वाच सद्गुरुम् टीकाश्रीश्रुतबोधस्यछन्दसःक्रियतेमया १ छन्दसामिति अहं तं श्रुतबोधन्नाम छन्दःशास्त्रं सम्प्रवक्ष्यामि कीदृशं तं अविस्तरं नविद्यते विस्तारोयस्मिन् सोऽविस्तर स्तमविस्तरं येन श्रुतमात्रेण प्रस्तारादिविनैव छन्दसा मार्य्यानुष्टुवादीनां लक्षणं गुरुलघुवर्णमात्रागणनादिस्वरूपम् बुध्यते ज्ञायते इत्यन्वयः १ संयुक्ताद्यमिति अथ छन्दोलक्षणस्य लघुगुरुज्ञानमन्तरेण दुर्विज्ञेयत्वात् लघुगुरुलक्षणमाह एतादृशमक्षरंगुरुज्ञेयम् कीदृशम् अक्षरम् संयुक्ताद्यम् संयुक्तस्य संयोगीभूतस्याद्यंमादिभवम् पुनःकीदृशम् दीर्घम् द्विमात्रिकं सानुस्वार मनुस्वारेणसहवर्त्तमानः पुनःविसर्गसंमिश्रं विसर्गेणसंमिश्रम् विसर्गसहितम् पादान्तस्थ मक्षरम् विकल्पेन गुरुलघुविज्ञेयम् पादान्तेगुरुर पि लघुस्स्यात् कुत्रचिल्लघुरपिगुरुस्यात् तथाचोक्तम् ग्रन्थान्तरे वा पादान्तेत्वसौवक्रोज्ञेयोऽन्योमात्रिको लघुः २ ॥ श्लोकादौकस्मिंश्चिद्गणेपतितेशुभं कस्मिंश्चिद्गणेपतितेचाशुभंभवतीत्यष्टगणानांलक्षणमाह ॥

आदिमध्यावसानेषु भजसा यान्ति गौरवम् यरता लाघवं यान्ति मनौ तु गुरुलाघवम् ३ यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेपि अष्टादश द्वितीये चतुर्थके पंचदश सार्या ४

आदिमध्यावसानेष्विति भजसाः भगण जगण सगणाः आदिमध्यावसानेषु गौरवं गुरुत्वं यान्ति आदिश्च मध्यंच अवसानंच तानि तेषु तथाहि आदिगुरुर्भगणः मध्यगुरुर्जगणः अंतगुरुः सगणः यरताः यगण रगणतगणाः आदिमध्यावसानेषु लाघवं लघुतां यांति तथाहि आदिलघुर्यगणः मध्यलघू रगणः अन्त्यलघुस्तगणः तु पुनः मनौ मगण नगणौ आदिमध्यावसानेषु गुरुलाघवं गुरुतां लघुतां च यातः तथाच सर्वगुरुर्मगणः सर्वलघुर्नगणः भवतीति एतेषां देवताफलंच ग्रंथांतरे मो भूमिः श्रियमातनोति यजलम् वृद्धिं रवन्हिर्मृतं सो वायुः परदेशदूरगमनं तव्योम शून्यम् फलम् जः सूर्यो भयमाददाति विपुलं भेंदु र्यशो निर्मलं नो नाग श्व सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः ३ यस्याः पाद इति सा आर्या भवति सा का यस्याः प्रथमे पादे द्वादश मात्राः स्युः तृतीये तथा द्वादश मात्रा भवंति द्वितीयेऽष्टादश मात्रा भवंति चतुर्थके पञ्चदश मात्रा भवंतिसाआर्या ४

१२ १८ १२ १५ मात्राः

१ २ ३ ४ पादाः

आर्यापूर्वार्द्धसमं द्वितीयमपियत्रभवतिहंसगते
छंदोविदस्तदानीं गीतिंताममृतवाणिभाषंते ५
आर्योत्तरार्द्धतुल्यं प्रथमार्द्धमपिप्रयुक्तञ्चेत्
कामिनितामुपगीतिं प्रकाशयन्तेमहाकवयः ६

॥आर्यापूर्वार्द्धसममिति हे अमृतवाणि छन्दोविदस्त-
दानीं तां गीतिं भाषंते ब्रुवते हे हंसगते यत्रार्या पूर्वार्द्धस
मं द्वितीयमपिउत्तरार्द्धमपि भवति पूर्वार्द्धस्य प्रथमे
द्वादश मात्रा द्वितीयेऽष्टादश तृतीये द्वादश चतुर्थके
ऽष्टादश संकलनया षष्ठि मात्रेत्यर्थः अमृत इव वाणी
वाक् यस्याः सा मृतवाणी तस्याःसंबुद्धौ छंदांसिविदंति
जानंति छंदोविदः शास्त्रज्ञा इत्यर्थः हंसस्यगति गम-
नमिव गमनंयस्याः सा हंसगता तस्याः संबुद्धौ हंसग
ते इत्यर्थः५ १२ १५ १२ १५ मात्राः ॥
१ २ ३ ४ पादाः ॥
आर्योत्तरार्द्ध तुल्य मिति हेकामिनि महाकवय स्तामुपगी
तिं प्रकाशयन्ते उपगीति संज्ञकाम् प्रकटीकुर्वते इत्य-
र्थः यदि आर्योत्तरार्द्धतुल्यम् प्रथमार्द्ध मपि प्रयुक्तञ्चेत्
प्रयोगीकृतं भवति उत्तरार्द्धेन द्वादशमात्रिकेन तुल्यम् स
मानम् भवति प्रथमे द्वादशमात्रा द्वितीये पञ्चदश तृती
ये द्वादश चतुर्थे पञ्चदश संकलनया ५४ चतुष्पञ्चा-
शत् मात्रेत्यर्थः कामो विद्यते यस्याः सा कामिनी तस्याः
सम्बुद्धौ महांतश्चते कवयश्चेति कर्म्मधारयः तथाचोक्तं
ग्रन्थान्तरे आर्याद्वि तीयेऽर्द्धेयद्गदितम् लक्षणं तत्स्यात्

आद्यंचतुर्थम् पञ्चमकञ्चेत्॥ यत्रगुरुःस्यात् साक्षरपङ्क्तिः ७ अगुरुचतुष्कम् भवतिगुरुद्वौ॥ घनकुचयुग्मे शशिवदनासौ ८ तुर्य्यम्पञ्चमकञ्चे द्यत्रस्याल्लघुबाले॥

यद्युभयोरपिदलयोरुपगीतिं तां मुनिर्ब्रूते ६॥ ७॥

अथाक्षरपङ्क्तिः आद्यचतुर्थमिति यत्र १२१५ १२१५ मात्राः १ २ ३ ४ पादाः यस्यां वृत्तौ आद्यं प्रथमं चतुर्थं पञ्चमकं गुरुः स्यात्। साक्षरपङ्क्तिः ज्ञेयम् अक्षरशः पादपूरणार्थः छंदस्तु पङ्क्तिः प्रति चरणे इदंलक्षणं तथाचोक्तंरत्नाकरे भ गि तिपङ्क्तिः अथशशिवदना ७॥ अगुरुइति हे घनकुचयुगे य

| भ | | | गण |
|---|---|---|---|
| ऽ। । | ऽ ऽ | लघु. | गुरु. |
| १ २ ३ | ४ ५ | | संख्या |

त्राद्यं चतुष्कम् वर्णचतुष्टयं अगुरुः स्यात् लघवः संति ततो द्वौ पंचम षष्ठौ गुरु दीर्घौ भवत स्तदा शशि वदना चरण चतुष्टये ष्विदं लक्षणं असावितिसंबंधः घने कठिनं कुच युग्मं यस्याःसा घन कुच युग्मा तस्याः संबुद्धौ तथाचोक्तंरत्नाकरे शशि वदना भ ऽ। । ऽ ऽ गण लघु. गुरु. यौ ८ सप्ताक्षरजातौमदलेखालक्षणमाह १२३ ४ ५ संख्या तुर्य्यमिति हेमृगनेत्रे यदि तुर्यम् चतुर्थम् पंचमकं पंचमं लघु स्यात् हेबाले नव यौवने विद्वद्भिः पंडितैः सा मदलेखा प्रोक्ता मृगस्य नेत्रे इव नेत्रे यस्याः सा मृगनेत्रा तस्याः संबुद्धौ उक्तंरत्नाकरे मसौस्यान्मदलेखा ८॥ ७॥ ॥

विद्वद्भिर्मृगनेत्रे प्रोक्तासामद्लेखा ८ श्लोकेषष्ठं गुरुज्ञेयं सर्वत्रलघुपंचमं ॥ द्विचतुष्पादयोर्ह्रस्वं सप्तमंदीर्घमन्ययोः १० पंचमंलघुसर्वत्र सप्तमंद्विचतुर्थयोः ॥ षष्ठंगुरु विजानीयादेतत्पद्यस्य लक्षणम् ११ आदिगतंतुर्यगतं पंचमकंचांत्यगतम् ॥

| न । । । । | य । ऽ ऽ । | गण ल॰गु॰ |
|---|---|---|
| १ २ ३ | ४ ५ ६ | संख्या |

अथाक्षरजातौपद्यलक्षणमाह श्लोकेइति अन्ययोः प्रथम तृतीय पादयोः सप्तम मक्षरं गुरु द्विमात्रिकं भवति सर्वत्र चतुर्ष्वपि चरणेषु पंचमं वर्णं लघु स्यात् षष्ठं गुरु स्यात् द्विचतु ष्पादयो र्द्वितीय चतुर्थ चरणयोः सप्तमं वर्णं ह्रस्वं ज्ञेयंईदृग्विधे श्लोके पद्येऽनुष्टुवादयो भवन्ति १०॥

| म ऽ ऽ ऽ | स । । ऽ | गण ऽ ल॰गु॰ |
|---|---|---|
| १ २ ३ | ४ ५ ६ ७ | संख्या |

अथपद्यलक्षणमाह पंचमिति एतत्पद्यस्य लक्षणं विजानीयात् यत्र सर्वत्र चरणेषु पंचमं लघु भवति द्विचतुर्थयोः द्वितीय चतुर्थ चरणयोः सप्तम मक्षरं लघु भवति सर्वत्र चरणेषु षष्ठं अक्षरं गुरु भवति ११॥

| १ ३ । ऽ ऽ | २ ४ । । ऽ । | पादाः ल॰गु॰ |
|---|---|---|
| ५ ६ ७ | ५ ६ ७ | संख्या |

माणवकाक्रीड लक्षणमाह आदिगतमिति तदिदं माणवकाक्रीडं कथितं कविभि रिसध्याहार्यं आदिगतं प्रथमं तुर्यगतं चतुर्थं पंचमकं पंचमं अंत्यगतं अंत्यस्थित मष्टमं गुरुःस्यात् तदिदं माणवकाक्रीडं बुधाविदंति तथाचोक्तंरत्नाकरे माणवकंभतल

स्याद्गुरुचेत्तत्कथितं माणवकाक्रीडमिदं १२ द्वि
तुर्यषष्ठमष्टमं गुरुप्रयोजितं यदा ॥ तदा निवेद
यंति तां बुधा नगस्वरूपिणीं १३ सर्वे वर्णा दीर्घा
यस्यां विश्रामः स्याद्वेदैर्वेदैः ॥ विद्वद्वृंदैर्वीणा
वाणी व्याख्याता सा विद्युन्माला १४ ॥

| भ | त | । | । गण |
|---|---|---|---|
| ऽ।। | ऽऽ | ।। | ऽ गु.ल. |
| १२३ | ४५६ | ७ | ८ संख्या |

गाः १२ ॥ अथ नगस्वरूपिणीलक्षणमाह द्वितुर्यइति बुधाः पंडिताः तदा तां नगस्वरूपिणीं निवेदयंति तदा कदा यदा द्वितीयं तुर्यं चतुर्थं षष्ठं अष्टमं अक्षरं गुरु प्रयोजितं गुरु संज्ञकं भवति एतादृशीं तां नगस्वरूपिणीं निवेदयंति तथाचोक्तं रत्नाकरे प्रमाणिका जरौ लगौ १३ अथ विद्युन्मालालक्षणमाह सर्वे वर्णा इति हे वीणावाणि

| ज | र | । | गण |
|---|---|---|---|
| ।ऽ। | ऽ।ऽ | । | ऽ ल.गु. |
| १२३ | ४५६ | ७ | ८ संख्या |

यति ५.३.

विद्वद्वृंदैः पंडित समूहैः सा विद्युन्माला व्याख्याता वीणायाः वाणीव वाणी यस्याः सा वीणावाणी तस्याः संबुद्धौ विदुषां पंडितानां वृंदानि समूहास्तैः सा कायस्यां सर्वे वर्णाः दीर्घाः गुरुभूताः भवंति वेदैर्वेदैः चतुर्भिः श्चतुर्भिर्विश्रामो भवतीति सा विद्युन्माला ॥

तथाचोक्तं रत्नाकरे मोमोगोगो विद्युन्माला १४ ॥

॥ छं ॥ अथ दशाक्षरजातौ चंपकमालालक्षणमाह तन्विइति

| म | म | । | गण |
|---|---|---|---|
| ऽऽऽ | ऽऽऽ | ऽ | ऽ ल.गु. |
| १२३ | ४५६ | ७ | ८ संख्या |

यति. ४.४.

तन्विगुरुःस्यादाद्यचतुर्थं पंचमषष्ठंचांत्यमुपांत्यं॥ इंद्रियबाणैर्यत्रविरामः साकथनीया चंपकमा। ला २५ चंपकमालायन्नभवे दंत्यविहीनोप्रेम। निधे॥ छंदसिदक्षायेकवय स्तन्मणिबंधंतेबु। वते २६ ह्रस्वोवर्णोजायते यत्रषष्ठः कंबुग्रीवेत। द्वेवाष्टमांत्यः॥

॥हेतन्वि तन्वंगि सा चंपकमाला कथनीया सा का यत्र यस्यां आद्य चतुर्थं प्रथम चतुर्थं पंचम षष्ठं अंत्यं दशमं उपांत्यं नवमं एते गुरवो भवं। ति यत्र इंद्रियबाणैःपंचभिःपं चभि रक्षरै विरामो विश्रा मः सा चंपकमाला कथनीया आद्य चतुर्थं पंचमं षष्ठं इत्येकत्वेद्विगु द्वंद्वो इंद्रियाणिच बाणाश्च इंद्रि यबाणा स्तैः तथाचोक्तंरत्नाकरे चंपकमालाचेन्नम। सौ॥ २५ ॥ | म ऽ । । म ऽ ऽ ऽ स । । ऽ ऽ गण ल. गु. । यति ५.५. अथनवाक्ष | १ २ ३ ४ ५ ६ ७ ८ ९ १० संख्या
रजातोमणिबंधलक्षणमाह चंपकमालेति हेप्रेम। निधे छंदसि छंदोग्रंथे येदक्षाः कुशला स्तेकवय स्त न्मणि बंध संज्ञकं ब्रुवते यत्रो त्य विहीना चंपकमा ला भवेत् चंपकमालातु दशाक्षरा इदं नवाक्षरं भवे त् लक्षणंतु तदेव चंपक माला गत मेव तन्मणिबंधः प्रेमस्य निधिरिव निधिः तस्याः संबुद्धौ अंत्य विहीनः अंते भवोंत्यो वर्णः तेन विहीना त्यक्ता भवेत् तदुक्तं रत्नाकरे भौसगयुक्तोरुक्मवती। २६ ॥ ७ ॥

विश्रामः स्यात्तन्विवेदैस्तुरंगैस्तां भाषंते शालिनीं छांदसीयाः २७ ॥ चत्वारः प्राक्सुतनुगुरवो हेद्शे कादशौ चेत् मुग्धेवर्णौ तदनु कुमुदामोदिनी द्वादशांत्यौ ॥ तद्वच्चांत्यौ युगरसहयैर्यत्र कांते विरामो मंदाक्रांतां प्रवरकवयस्तन्वितां संभिरंते २८

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| म | | म | | स | | | | गण | |
| ऽ | । | । | ऽ | ऽ | ऽ | । | । | ऽ | गु.ल. |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | संख्या |

एकादशाक्षरजातौ शालि यति. ५.४ नी साह ह्रस्वइति हे तन्वि कृशांगि छांदसीयाः छंदसि कुशलास्तां शालिनीं भाषंते तां कांहे कंबुग्रीवे यत्र यस्यां षष्ठो वर्णो ह्रस्वः तद्वदष्टमांत्यः नवमः ह्रस्वोजायते यत्र वेदैश्चतुर्भिस्तुरंगैः सप्तभिः विश्रामः स्तां शालिनीं भाषंते ब्रुवते कंबोः शंखस्य ग्रीवाव ग्रीवा यस्याः सा संबुद्धौ कंबुग्रीवा त्रिरेखास्मा दित्यमरः तदुक्तं रत्नाकरे शालिन्युक्ता म्तौत्तगौ गो म्तौगः

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| म | | भ | | न | | त | | त | | | | | | | | |
| ऽ | ऽ | ऽ | ऽ | । | । | । | । | । | ऽ | ऽ | । | ऽ | ऽ | । | ऽ | ऽ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ |

यति. ४.६.७.

२७ ॥ चत्वारइति हे सुतनु सुष्ठु तनुः कायो यस्याः सा तस्याः संबोधनं हे सुतनु अत्र धोवेति सूत्रेण इकारो कारयो रेकारो कारो नस्तः कस्मात् क्वचिद्धो परे पि समासांत शब्दस्ये कारस्यो कारस्य च धावि स्येकारो कारो न भवतः इति वाक्यहे सुतनु प्रवर कवयः श्रेष्ठकवयः तां मंदाक्रांतां वदंति तां कांचित् यदि यत्र यस्यां प्रागादौ चत्वारो वर्णा गुरवः भवंति हे मुग्धे च पुनः द्वादशै कादशौ वर्णौ

मंदाक्रांतास्ययतिरहिता सालंकारे भवतियदि सौतद्विद्भिर्ध्रुवमभिहिता ज्ञेयाहंसीकमलवदने १९ आद्यचतुर्थमहीननितंवे सप्तमकंदशमंचतथांत्यम्॥

॥ गुरू भवतः हे कुमुदामोदिनि च पुनः तदनु द्वादश्यां स्यौ त्रयोदशा चतुर्दशौ वर्णौ गुरू भवतः च पुनः अं सौ तद्भवतः हेकांते च पुनः युगरसहयैश्चनुः षट् सप्तभिः क्रमेण विरामो भवति प्रवरकवयः तद्विदः १८॥ हंस्याः लक्षणमाह

म । भ । न । त । त ।
ऽऽऽऽ। । । । ।ऽऽ। ऽऽ। ऽऽ
१२३४५६७ ८९१०१११२१३१४१५१६१७
यति ४.६.७.

मंदाक्रांतेति हेकमलवदने तन्वि दा ध्रुवं निश्चयेन हंसी ज्ञेया ज्ञातव्या कमलवत् सौंदर्यसौरभादिगुणैः कमलसदृशं वदनं मुखं यस्याःसातत्संबोधनं कथंभूताहंसी विद्वद्भिः पंडितैः अभिहिता कथिता तदा कदा हे सालंकारे यदि मंदाक्रांता अंत्ययति रहिता अंते भवा अंत्या मंदाक्रांतायां युगरसहयैः विश्रामः सा न्त्य रहिता दशा वर्णात्मिका सा हंसीज्ञेया लक्षणं मंदाक्रांतस्यैव अलंकारेण आभूषणेन सह वर्त्तमाना सा लंकारा तस्याः संबोधनं सालंकारे १९ ॥ अथ दोधकवृत्तलक्षणमाह आद्यचतुर्थमिति हे प्रकटस्मरसारे कवि

म । भ । न । गण
ऽऽऽऽ।।।।।ऽ गु.ल.
१२३४५६७८९१० संख्या.
यति ४.७.

भिः ननु दोधकवृत्तं कथितं प्रकटस्मरसारः कामवलं

यत्रगुरुप्रकटस्मरसारे तत्कथितंननुदोधकवृत्तं २०॥ यस्यांत्रिषट्सप्तममक्षरंस्याद्ध्रस्वंसुजंघे नवमंचतद्वत्॥ गत्याविलज्जीकृतहंसकांते तामिंद्रवज्रांब्रुवतेकवीन्द्राः २१॥ यदिंद्रवज्राचरणेषुपूर्वे भवंतिवर्णालघवःसुवर्णे॥

((यस्याः सा

तस्याः संबोधनंहेअहीननितंबे यत्रास्मिन् आद्यचतुर्थं प्रथम चतुर्थं सप्तमकं सप्तमं दशमं तथा अंत्यं एकादशम् एतानि अक्षराणि गुरवः संति अहीनौ स्थूलौ नितंबौ कटिपश्चाद्भागौ यस्याः संबुद्धौ तदुक्तं रत्नाकरे दोधकवृत्तमिदं भभभागौः २०॥ अथेंद्रवज्रा

| भ | भ | भ | गण |
|---|---|---|---|
| ऽ।। | ऽ।। | ऽ।। | ऽऽ ल. गु. |
| १२३ | ४५६ | ७८९ | १०११ संख्या |

यति.५.६

लक्षणमाह यस्यामिति हेगत्या विलज्जीकृतहंसकांते कवींद्रास्तां इंद्रवज्रां ब्रुवते गत्या गमनेन विलज्जीकृता हंसस्य कांतिःशोभा यया सा तस्याः संबोधनं तां कां यस्यां त्रिषट् सप्तममक्षरंह्रस्वं स्यात् तद्वत् नवमं ह्रस्वंस्यात् हेसुजंघे ता मिति संबंधः एतादृशीं इंद्रवज्रां ब्रुवते सुष्टु शोभने जंघे यस्याः सा संबुद्धौ कवीनां कविषु वा इंद्राः पूज्या रहंसत्यादयः तदुक्तं रत्नाकरे स्यादिंद्रवज्रा यदितौजगौगः २१॥ अथउपेंद्रवज्रालक्षणमाह यदीति हेअमंद

| त | त | ज | गण |
|---|---|---|---|
| ऽऽ। | ऽऽ। | ।ऽ। | ऽऽ ल. गु. |
| १२३ | ४५६ | ७८९ | १०११ संख्या |

यति ५.६

अमंदमाद्यन्मदनेतदानी मुपेंद्रवज्राकथिताकवीद्रैः २२ ॥ यत्रद्वयोरप्यनयोस्तुपादा भवंतिसीमंतिनिचंद्रकांते ॥ विद्वद्भिराद्यैःपरिकीर्त्तितासाप्रयुज्यतामित्युपजातिरेषा २३ ॥ छं ॥

माद्यन्मदनेतदानीं कवीन्द्रैः यदीं द्रवज्रा चरणेषु पूर्ववर्णा लघवःसंति शेष मिंद्रवज्रावत् आद्य वर्ण ह्रस्वमेवेति शेषः चतुर्ष्वपि पादेषु आद्यो ह्रस्वः हे सुवर्णे । सा उपेंद्रवज्रा कथिता अमंदं व हुलं माद्यन् हर्षं कुर्वन् मदनो यस्याः सा संवुद्धौ तथाचोक्तंरत्नाकरे उपेंद्रवज्राजतजास्ततोगौ २२ ॥

| ज | त | ज | | गण |
|---|---|---|---|---|
| ।ऽ। | ऽऽ। | ।ऽ। | ऽऽ | लगु |
| १२३ | ४५६ | ७८९ | १०११ | संख्या |
| यति ५.६ | | | | |

उपजातिलक्षणमाह यत्रेति हेचंद्रकांते सा एषा उपजातिरिति प्रयुज्यतां कथंभूता सा आद्यैः पुरातनैर्विद्वद्भिः पंडितैः परिकीर्तिता कथिता सा का हेसीमंतिनि यत्र द्वयोरनयोरिंद्रवज्रोपेंद्रवज्रयोरपि पादाः यथा क्रमेण भवन्ति प्रथम तृतीये इंद्रवज्रालक्षणं द्वितीय चतुर्थे उपेंद्रवज्रालक्षणं सीमंतः केशवेशो विद्यते यस्याः सा संवुद्धौ चंद्रवत्कांतिः यस्याः सा संवुद्धौ पक्षे चंद्रवत्कांतिक मनीया यस्याः सा संवुद्धौ तदुक्तंर॰

तौजौगः

| त | त | ज | | गण |
|---|---|---|---|---|
| ऽऽ। | ऽऽ। | ।ऽ। | ऽऽ | लगु |
| १२३ | ४५६ | ७८९ | १०११ | संख्या |
| यति ५.६ | | १.३ पादौ | | |

जतौजौगः

| ज | त | ज | | गण |
|---|---|---|---|---|
| ।ऽ। | ऽऽ। | ।ऽ। | ऽऽ | लगु |
| १२३ | ४५६ | ७८९ | १०११ | संख्या |
| यति ५.६ | | २.४ पादौ | | |

आख्यानकीस्यात्प्रकटीकृतार्थे यदींद्रवज्राचरणः पुरस्तात् ॥ उपेंद्रवज्राचरणास्त्रयोन्ये मनीषिणोक्ताविपरीतपूर्वा २४ ॥ आद्यमक्षरमतस्तृतीयकं सप्तमंचनवमंतथांतिमम् ॥

॥ त्नाकरे अनंतरोदीरितलक्ष्मभाजौ पादौयदीयावुपजातयस्ताः २३ अथाख्यानकीलक्षणमाह आख्यानकीति हे प्रकटीकृतार्थे मनीषिणा विदुषा यदि इंद्रवज्रावत् प्रथमचरणः स्यात् अन्ये त्रयश्चरणा उपेंद्रवज्रावत् पादाः संति तदा विपरीतपूर्वाख्यानकी विपरीताख्यानकीत्यर्थः प्रकटीकृतोऽर्थः कामलक्षणो यया सा संबुद्धौ यद्वा प्रकटीकृतोर्थो यस्याः सा मनीषा बुद्धिर्विद्यते यस्य सः तेन यदि वृत्तरत्नाकरे नोक्तं तथापि पिंगलादिभिराचार्यैरुक्ताः एव हलायुधादौ २४ ॥ अथरथोद्धतालक्षणमाह आद्यमिति हे इंदुमुखि कवयः तां रथोद्धतां वदंति कां यत्राद्यमक्षरमतस्तृतीयकं सप्तमं नवमं तथान्त्यमं एकादशं एते वर्णाः दीर्घाः द्विमात्रिका जायंते इंदुवन्मुखं यस्याः सा संबुद्धौ तदुक्तं रत्नाकरे र नरा विहितारथोद्धतालगौ ॥ २५ ॥ श्रीराम ॥

| त | त | ज | गण | तौजौगः |
|---|---|---|---|---|
| ऽऽ। | ऽऽ। | ।ऽ। | ऽऽ लः गु | १ त्तौजौगः |
| १२३ | ४५६ | ७८९ | १०११ संख्या | ॥ पादः |

| ज | त | ज | गण | ॥ यतिः ५, ६ |
|---|---|---|---|---|
| ।ऽ। | ऽऽ। | ।ऽ। | ऽऽ लः गु | ॥ २३४ पादः |
| १२३ | ४५६ | ७८९ | १०११ | यतिः ५, ६ |

| र | न | र | गण |
|---|---|---|---|
| ऽ।ऽ | ।।। | ऽ।ऽ | । ऽ लः गु |
| १२३ | ४५६ | ७८९ | १०११ संख्या |
| | | | यतिः ७, ५ |

दीर्घमिंदुमुखियत्र जायते तांवदंतिकवयोरथोद्ध
तां २५ ॥ अक्षरंचनवमंदशमंचे द्व्यत्ययाद्भवति
यत्र विनीते ॥ प्रोक्तमेणनयनेयदिसैव स्वागते॥
तिकविभिः कथितासौ २६ ॥ ह्रस्वोवर्णः स्यात्स॥
प्तमोयत्रबाले तद्वद्बिंबोष्ठिन्यस्तएकादशाद्यः॥

स्वागतायाल्लक्षणमाह अक्षरमिति हेएणनयनेसै॥
षा रथोद्धता तदा कविभिः स्वागतेति कथिता हेविनी
ते नम्रीभूते यदि यत्र यस्यां व्यत्ययात् वैपरीत्येन नव॥
म मक्षरं दशमवत् दशम नवमवत् नवमो लघुः द
शमो गुरुः द्वौ चकारौ विपरीतार्थे सूचकौ एणस्य नय
ने इव नयने यस्याः सा तस्याः संबुद्धौ अय मर्थः रथोद्ध
तायां नवमं अक्षरं गुरु भवति दशमंचाक्षरं लघुः भ
वति स्वागतायांतु नवमं अक्षरं लघु दशमं चाक्षरं गु
रु भवतीतिभावः तदुक्तं रत्नाकरे स्वागतेति र न भाद्गु
रुयुग्मं २६ ॥ अथ वैश्वदेवीलक्षणंमाह ह्रस्वइति यत्रस

| र | | | न | | | भ | | | | | गण |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ऽ | । | ऽ | । | । | । | ऽ | । | । | ऽ | ऽ | ल.गु. |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | संख्या |

यति.७.४.

प्तमो वर्णो ह्रस्वः स्यात् हेबाले षोडशवर्षाभ्यांतरवयस्के
तद्वत् पूर्वोक्त प्रकारवत् हेबिंबोष्ठि एकादशाद्यो दश
मो वर्णः ह्रस्वः स्यात् एवंन्यस्तः निक्षिप्तः स्यात् चेद्य
दि तत्र बाणैः पंचभिः तुरंगैः सप्तभिश्च विश्रामः स्या
त् हेसुभ्रु सा नाम्ना वैश्वदेवी निर्दिष्टा कथिता सुभ्रु

वाणैर्विश्रामस्तत्र चेद्वा तुरंगै नाम्ना निर्दिष्टा तु भूसा वैश्वदेवी २७ ॥ सतृतीयकषष्ठमनङ्गरते नवमं विरतिप्रभवं गुरु चेत् ॥ घनपीनपयोभरभारभृते ननु तोटकवृत्तमिदं कथितं २८ ॥ यदाद्यं चतुर्थं तथा सप्तमं चेत्तथैवाक्षरं ह्रस्वमेकादशाद्यम् ॥

९भुवो यस्याः सा तस्याः संबुद्धौ विवदोषौ यस्याः सा एकादशा दौ जात एकादशाद्यः तदुक्तं रत्नाकरे पंचाश्वैश्छिन्नावैश्वदेवी मोयो २७ ॥ द्वादशाक्षरजातौ तोटकलक्षणमाह सतृती यकेति हे घनपीनपयोधर भारनते ननु इह निश्चितम् तोट

| म | म | य | य | गण |
|---|---|---|---|---|
| ऽऽऽ | ऽऽऽ | ।ऽऽ | ।ऽऽ | ल.गु. |
| १२३ | ४५६ | ७८९ | १०११ १२ | संख्या |

यति ५.७.

कवृत्तं कथितं विस्तारितं चेद्यदि हे अनंगरते सतृतीयकम् षष्ठं नवमं गुरुः स्यात् तृतीयं च तृतीय षष्ठे षष्ठं च ताभ्यां सह वर्त्तते इति कीदृशं विरतिप्रभवं अंत्यं द्वादशं गुरुः स्यात् अनंगरता अपरिमिता रति र्यस्याः सा अनंगरता संबुद्धौ घनौ च पीनौ च घनपीनौ कठिननिविडौ पयोधरौ च तयो भारः आधिक्यं तेन नत्तान म्नीभूता या सा संबुद्धौ विरते प्रभव उत्पत्ति र्यत्र तथोक्तं रत्नाकरे इह तोटकमंबुधिसैः कथितम् २८ भुजंगप्रयातलक्षणमाह यदाद्यमिति

| य | य | य | य | गण |
|---|---|---|---|---|
| ।ऽऽ | ।ऽऽ | ।ऽऽ | ।ऽऽ | ल.गु. |
| १२३ | ४५६ | ७८९ | १०११ १२ | संख्या |

यति ६.६.

शरच्चंद्रविद्वेषिवक्त्रारविंदे तदुक्तं कवींद्रैर्भुजंगप्रयातम् २९ ॥ अयि कृशोदरि यत्र चतुर्थकं गुरु च सप्तमकं दशमं तथा ॥ विरतिजं च तथैव विचक्षणै र्द्रुतविलंबितमित्युपदिश्यते ३० ॥

। हे शरच्चंद्रविद्वेषिवक्त्रारविंदे कवींद्रैस्तच्छंदो भुजंगप्रयातम् उक्तं कथितम् किं चेद्यदा आद्यं प्रथमं तथा चतुर्थं तथा सप्तमं एव निश्चितं एकादशाद्यं एकादशस्यादिभूतं दशाम मक्षरं ह्रस्वं स्यात् तदिति संबंधः शरदः चंद्रः शरच्चंद्रः तस्य विद्वेषि वक्त्रमेवारविंदं यस्याः सा संबुद्धौ तदुक्तं रत्नाकरे भुजंगप्रयातं भवेद्यैश्चतुर्भिः

| य | य | य | य | गण |
|---|---|---|---|---|
| ।ऽऽ | ।ऽऽ | ।ऽऽ | ।ऽऽ | ल.गु. |
| १२३ | ४५६ | ७८९ | १०१११२ | संख्या |

यति.६.६ ॥ २९ द्रुतविलंबितलक्षणमाह अयिकृशोदरीति अयि कोमलालापे विचक्षणैः पंडितैः द्रुतविलंबितमित्युपदिश्यते इति किं हे कृशोदरि यत्र चतुर्थकं चेत् सप्तमकं तथा दशमं इमान्यक्षराणि गुरवः संति विरतिजं अंत्यं द्वादशमं गुरुः स्यात् इत्यर्थः कृशमुदरं यस्याः सा कृशोदरि संबुद्धौ तदुक्तं रत्नाकरे द्रुतविलंबितमाह नभौ भरौ ३० ॥ ॥ ॥ ॥ ॥

| न | भ | भ | र | गण |
|---|---|---|---|---|
| ।।। | ऽ।। | ऽ।। | ऽ।ऽ | ल.गु. |
| १२३ | ४५६ | ७८९ | १०११२ | संख्या |

यति.७.५.

प्रमिताक्षरालक्षणमाह यदितोटकइति

यदितोटकस्य गुरु पंचमकं विहितं विलासिनि तदक्षरकं रससंख्यकं गुरु न चेदबले प्रमिताक्षरेति कविभिः कथिता ३१ ॥ प्रथमाक्षरमाद्यतृतीययोर्द्रुतविलंवितकस्य च पादयोः ॥ यदि चेन्नतदा कमलेक्षणे भवति सुंदरि सा हरिणीप्लुता ३२ ॥ छ ॥

हे अवले कविभिः प्रमिताक्षरा इति कथिता इति किं हे विलासिनि यदि तोटकस्य उक्तलक्षणकस्य पंचमकं वर्णं गुरु विहितं स्यात् रससंख्यकं गुरु न चेत् षष्ठो गुरुर्न गुरुस्तु पंचममेव सा प्रमिताक्षरेत्यर्थः विलासो विभ्रमो यस्याः सा विलासिनी संवुद्धौ तदुक्तं रत्नाकरे प्रमिताक्षरासजससैरुदिता

| स | | | ज | | | स | | | स | | | गण |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| । | । | ऽ | । | ऽ | । | । | । | ऽ | । | । | ऽ | ल०गु० |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | संख्या |

यति ६.६

३१ अथ हरिणीप्लुतालक्षणमाह प्रथमाक्षरमिति हे कमलेक्षणे स्रकविभिः तदेयं हरिणीप्लुता कथिता यदि द्रुतविलंवितकस्य छंदसः आद्यः तृतीययोः पादयोः प्रथमाक्षरं न चेत् एकादशाक्षरं मेवं विषमपादयोः तदेयं हरिणिप्लुता कमलवत् ईक्षणे यस्याः सा संवुद्धौ हे सुंदरि शुभांगे तदुक्तं रत्नाकरे सोस्सौगः न्भौभ्रौ॥ हरिणीप्लुता ३२

१.३ पादे

| स | | | स | | | स | | | गण |
|---|---|---|---|---|---|---|---|---|---|
| । | । | ऽ | । | । | ऽ | । | । | ऽ | । | ऽ | ल०गु० |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | संख्या |

यति ६.५

२.४ पादे

| न | | | भ | | | भ | | | र | | | गण |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| । | । | । | ऽ | । | । | ऽ | । | । | ऽ | । | ऽ | ल०गु० |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | संख्या |

यति ७.५

उपेंद्रवज्रा चरणेषु संति चे दुपांत्यवर्णो लघवः कृ-तायदा ॥ मदोल्लसद्भ्रूजितकामकार्मुके वदंति वं-शस्थमिदं बुधास्तदा ३३ यस्यामशोकांकुरपाणि-पल्लवे वंशस्थपादा गुरुपूर्ववर्णकाः ॥ तारुण्यहे-लारतिरंगलालसे तामिंद्रवंशां कवयः प्रचक्ष-ते ३४ ॥

वंशस्थलक्षणमाह उपेंद्रवज्रेति हे मदोल्लसद्भ्रूजि-तकामकार्मुके तदा बुधा इदं वंशस्थं वदंति तदा क-दा यदा उपेंद्रवज्रा चरणेषु उपांत्यवर्णाः अंत्यसमी-पस्थवर्णा एकादश संज्ञिक लघवः संति प्रति चर-णे एकादशमो वर्णो लघु स्तदा वंशस्थं मदेन उल्लसं-तौ भ्रुवौ ताभ्यां जितः कामकार्मुको मदनधनुर्यया सा संबुद्धौ अंतस्य समीपं उपांत्य उपांत्याश्चते वर्णाश्चेति तदुक्तं रत्नाकरे जतौ तु वंशस्थमुदीरितं जरौ ३३

| ज | । | त | । | ज | । | र | । | गण | यति ८.४ |
|---|---|---|---|---|---|---|---|---|---|
| ।ऽ | । | ऽऽ | । | ।ऽ | । | ऽ | । | ऽ ल.गु. | |
| १२३ | | ४५६ | | ७८९ | | १०१११२ | | संख्या | |

इंद्रवंशालक्षणम् यस्यामशोकामिति हे तारुण्यहेलारति रंगलालसे कवयो यस्यां वंशस्थपादा गुरुपूर्ववर्णका भवंति हे अशोकांकुरपाणिपल्लवे तामिन्द्रवंशां प्रचक्षते ब्रुवते अशोकांकुरवत् पाणिपल्लवौ यस्याः सा तारुण्यस्य हेलाः ताभि रति रंग लालसा अभिलाषा यस्याः सा संबुद्धौ तदुक्तं रत्नाकरे स्यादिंद्रवंशा तौ जरौ ३४ ॥

| त | । | त | । | ज | । | र | । | गण | यति ८.४ |
|---|---|---|---|---|---|---|---|---|---|
| ऽऽ | । | ऽऽ | । | ।ऽ | । | ऽ | । | ऽ ल.गु. | |
| १२३ | | ४५६ | | ७८९ | | १०१११२ | | संख्या ॥ | |

यस्यां प्रिये प्रथमकमक्षरद्वयं तुर्यं तथा गुरु नवमं दशांतिकं ॥ सांत्यं भवेद्विरत्यपि चेद्युगग्रहैः सा लक्षिताद्य मृतलते प्रभावती ३५ ॥ आद्यं चेत्त्रितयमथाष्टमं नवांत्ये द्वेचान्त्ये गुरुविरतौ सुभाषिते स्यात् ॥ विश्रामो भवति महेशनेत्रदिग्भिर्विज्ञेया ननु सुभगे प्रहर्षिणी सा ३६ ॥ ॥

॥ त्रयोदशाक्षरजातौ प्रभावती लक्षणमाह यस्यामिति हे अमृतलते यस्यां प्रथममक्षरद्वयम् तुर्यं चतुर्थं तथा नवमं दशांतिकं दशमसहितं त्रयोदश वर्णं युगग्रहैः चतुर्नव वर्णानंतरं च विरतिः सा प्रभावती लक्षिता कथिता अमृतस्य लतेव लताया सा संबुद्धौ

| त | | | भ | | | स | | | ज | | | गण | पति ४९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ऽ | ऽ | । | ऽ | । | । | । | । | ऽ | । | ऽ | । | ऽ | ल. गु. |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | संख्या |

३५ ॥ अथ प्रहर्षिणीलक्षणमाह आद्यमिति हे सुदति ननु इति निश्चितम् आद्यं त्रितयं प्रथमतः वर्णत्रयं अथाऽष्टमं नवांत्यं दशमंचांत्ये द्वे द्वादश त्रयोदशाख्ये एते गुरवो भवंति हे सुभाषिते महेशनेत्रै वर्णत्रयानंतरं दिग्भिर्दश वर्णानन्तरं च विश्रामः स्यात् सा प्रहर्षिणी विज्ञेया ज्ञातव्या स्रुशोभनं भाषणं यस्याः सा सुशोभना द

आद्यं द्वितीयमपि चेद्गुरु तच्चतुर्थं यत्राष्टमं च दशमांत्यमुपांत्यमन्त्यं कामांकुशांकुशितकाममतंगजेंद्रे कान्ते वसंततिलकां किल तां वदंति ३७ ॥ प्रथममगुरुषट्कं विद्यते यत्र कांते तदनु च दशमं चेदक्षरं द्वादशांत्यं गिरिभिरथ तुरंगैर्यत्र कांते विरामः सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा ३८ ॥ ॥

म्नौ ज्रौ गः मत्तमयूरछन्दः ॥

। म । त । य । स । गण
ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । । ऽ ऽ यतिः ४.९
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ संख्या

न्ता यस्याः सा सुदती संबुद्धौ तदुक्तं रत्नाकरे म्नौ ज्रौ गस्त्रिदश यतिः प्रहर्षिणीयं ३६ ॥ ॥

॥ ॥ चतुर्दशजातौ वसंततिलकालक्षणमाह आद्यमिति हे कामांकुशैः कुशितकामिमतंगजेन्द्रे यत्र आद्यं प्रथमं द्वितीयमपि गुरु श्चतुर्थं दशमांत्यं एकादशं उपांत्यं त्रयोदशं अंत्यं चतुर्दशं एते गुरवः स्युः हे कांते बुधास्तां वसंततिलकां वदंति कामा एवांकुशास्तैन कुशिता वशीकृताः कामिनः मत्तगजेंद्रा यया सा संबुद्धौ तदुक्तं रत्नाकरे उक्ता वसंततिलका त भजा जगौ गः ३७ ॥

। म । न । ज । र । गण
ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ ल. गु.
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ संख्या
यतिः ३.१०

। त । भ । ज । ज । गण । यतिः ८.६
ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ ल. गु.
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ संख्या

पंचदशाक्षरजातौ मालिनीलक्षणमाह प्रथममिति हे कांते यत्र प्रथमं षट्कं गुरु लघुरेव भवति दशमं तदनु लघुरेव चेत् द्वादशान्त्यम् त्रयोदशः लघु गिरिभिरथ

सुमुखि लघवः पंच प्राच्यास्ततो दशमांतिकं तद नु ललितालापे वर्णौ यदि त्रिचतुर्दशौ ॥ प्रभवति पुनर्यत्रोपांत्यः स्फुरत्करकंकणे यतिरपि रसैर्वेदै रश्वैः स्मृता हरिणीति सा ३९ ॥ यदा पूर्वो ह्रस्वः क लितकमले षष्ठकपरा स्ततो वर्णाः पञ्च प्रकृतिसु कुमारे विरचिता ॥

१९ तुरंगै रष्टभिः सप्तभि श्च विराम स्तदा स्फुकवि जनः मनोज्ञा मालिनी सा प्रसिद्धा । कृता तदुक्तं रत्नाकरे ननमयय युतेयं मालिनी भोगि लोकैः ३८ ॥ छं ॥

| न | न | म | य | य | गण |
|---|---|---|---|---|---|
| ।।। | ।।। | ऽऽऽ | ।ऽऽ | ।ऽऽ | ल॰ गु॰ |
| १२३ | ४५६ | ७८९ | १०११ १२ | १३१४१५ | सं॰ |

॥ यति ८.७ ॥

॥ सप्तदशाक्षरजा तो हरिणीलक्षणम् ॥

ह सुमुखीति हे स्फुरत्करकंकणे यत्र प्राच्याः प्रथमाः पंचवर्णाः लघवः संति ततो दशमोंतिक एकादशः हे ललितालापे यदि त्रिचतुर्दशौ त्रयोदश चतुर्दशौ लघू स्यातां उपांत्यः षोडशोपि लघुः रसैः षड्भि र्वेदै श्चतुर्भि रश्वैः सप्तभिः विरामः स्यात् तदा सा हरिणी स्मृता स्फुरंती करयोः कंकणे यस्याः सा ललितं आलापं यस्याः सा उक्तं च रत्नाकरे रसयुगहयैर्न्सौ म्रौ स्लौगः हरिणी ३९

| न | स | म | र | स | |
|---|---|---|---|---|---|
| ।।। | ।।ऽ | ऽऽऽ | ऽ।ऽ | ।।ऽ | ।ऽ |
| १२३ | ४५६ | ७८९ | १०११ १२ | १३१४१५ | १६१७ |

यति ६.४.७

अथ शिखरिणीलक्षणम् यदा पूर्वो ह्रस्व इति हे सुतनु जघनाभोगसुभगे यदा पूर्वो वर्णो ह्र

त्रयोन्ये चोपांत्याः सुतनु जघनाभोगसुभगे रसैरु
द्रैर्यस्यां भवति विरतिः सा शिखरिणी ५०॥ द्विती
यमलिकुंतले यदि षडष्टमं द्वादशं चतुर्दशमथ
प्रिये गुरु गभीरनाभिह्रदे॥ सपंचदशमांतिकं तद
नुयत्र कांते यतिः ५

॥ स्त्रो भवति हे प्रकृतिसुकुमारे
ततः षष्ठकपराः षष्ठतः पंचवर्णाः सप्तमा ष्टम नवम
दशमै कादशाः लघवः संति अन्ये उपांत्या स्त्रयो व
र्णा श्चतुर्दश पंचदश षोडशा लघवो भवंति यस्यां र
सैः षड्भिः रुद्रैः एकादशैः विरति र्भवेत् हे सुतनु
सा शिखरिणी रचिता कथितं मनोहरं कमलं यस्याः
सा प्रकृत्या स्वभावेन सुकुमारा जघनयोः आभोग
स्तेन सुभगा सुशोभना तनु र्यस्याः सा संवुद्धौ तदुक्तं
रत्नाकरे रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी

| ५०॥ | य । | | | म । | | | न । | | | स । | | | भ । | | | गण | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| पृथ्वी | । | ऽ | ऽ | ऽ | ऽ | ऽ | । | । | । | । | । | ऽ | ऽ | । | । | । | ऽ | ल॰गु |
| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | सं॰ |
| लक्ष | | | | | | | | यति-६. ११ | | | | | | | | | | |

णमाह द्वितीयमिति हे सुभ्रु यदि द्वितीय संख्यको
गुरुः स्यात् हे अलिकुंतले षड ष्टमं च गुरुः हे प्रिये
द्वादशम थ चतुर्दशम् गुरुः हे गभीर नाभिह्रदे
पंचदशा मेन सहितः अंतिकः गुरुः स्यात् हे कांते य
त्र गिरीन्द्र सप्त फणिभृत्कुलै र ष्टभि र्यतिः स्यात्
सा पृथ्वी नामको वृत्तो भवति अलिवत् भ्रमरवत्

गिरींद्रफणिभृत्कुले भवति सुभ्रुपृथ्वी हि सा ५१ ॥ चत्वारः प्राक्सुतनु गुरवो द्वादशैकादशौ चेन्मुग्धे वर्णौ तदनु कुमुदामोदिनि द्वादशांत्यौ ॥ तद्वच्चांत्यौ युगरसहयैर्यत्र कांते विरामो मंदाक्रांता प्रवरकवयस्तन्वितां संगिरंते ५२ ॥

श्यामकुंतला अलकाः यस्याः सा गंभीरा निम्ना नाभिर्वन्हदो यस्याः सा संबुद्धौ तदुक्तं रत्नाकरे जसौजसयलावसुग्रहयतिश्च पृथ्वी गुरुः ५१ ॥ मंदाक्रांता ॥

ज । स । ज । स । य । गण
। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७
यतिः ९

लक्षणमाह चत्वार इति हे तन्वि प्रवरकवयः यत्र प्राक् चत्वारो वर्णा गुरवः स्युः हे कुमुदामोदिनि चेत् वर्णास्तदनु गुरुभूताः संति हे मुग्धे द्वादशांत्यौ द्वादशसंख्यस्थितौ त्रयोदश गुरू स्यातां अंत्यौ षोडश सप्तदशौ तद्वत् गुरुः युगरसहयैर्विरामः एतादृशीं तां मंदाक्रांतां संगिरंते कुमुदवदामोदः सुगंधिर्यस्याः सा तथोक्तं रत्नाकरे मंदाक्रांता जलधिषडगैर्भ्तौ ताद्गुरू चेत् ५२ ॥ ६ ॥

॥ ६ ॥ एकोनविंशतिजातौ शार्दूलविक्रीडितमाह आद्यैरिति हे पूर्णेन्दुबिंबानने काव्यरसि

आद्याश्चेद्गुरवस्त्रयः प्रियतमे षष्ठस्तथा चाष्टमो नन्वेकादशतस्त्रयस्तदनु चेदष्टादशाद्यौततः ॥ मार्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिंबानने तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीडितं ५३ ॥ चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोपि द्वौ तद्वत्षोडशाद्यौ मृगमदमुदिते षोडशान्त्यौ तथान्त्यौ ॥ ० ॥

का स्तद्वृत्तं शार्दूलविक्रीडितं वदन्ति यत्राद्यस्त्रयो गुरवः षष्ठस्तथाऽष्टमः गुरुः ननु एकादशतस्त्रयः द्वादश त्रयोदश चतुर्दशा गुरवः ततश्चेत् अष्टादशस्याद्यौ षोडश सप्तदशौ तदनु गुरुरूपाः संति यत्र मार्तण्डैर्मुनिभिर्द्वादश सप्तभिर्विरतिः हि प्रियतमे तदेतत् शार्दूलविक्रीडितं पूर्णश्चासा विंदुस्तद्विंववदाननं यस्याः सा अतिशयेन प्रिया तस्याः संबुद्धौ तदुक्तं रत्नाकरे सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितं ५३ ॥ एकविंशत्यक्षरजा

म । स । ज । स । त । त ।
ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९
यति १२.७.

तौ स्रग्धरालक्षणं चत्वार इति हे सुदति वंद्यैः पूज्यैः कवीन्द्रैः प्रसिद्धा इयं स्रग्धरा गदिता यत्र प्रथमं चत्वारो वर्णा अलघवो गुरवः संति षष्ठकः सप्तमो

रंभास्तंभोरुकांते मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो बाले वंद्यैः कवींद्रैः स्तनुनिगदिता स्रग्धरा सा प्रसिद्धा ४५ ॥ ॥ इतिश्रीकविकालिदासकृतश्रुतबोधनाम कश्छंदोग्रंथः समाप्तः ॥ ॥

पि तद्वत् गुरुः षोडशा द्वौ चतुर्दश पंचदशौ तथांत्यौ सप्तदश ष्टादशौ गुरू स्यातां मुनि मुनि मुनिभि र्विरामः हेरंभास्तंभोरुकांते हे बाले इयं स्रग्धरा प्रसिद्धा मृगस्य मदेन मुदिता सा रंभायाः स्तंभवत् ऊर्वोः कांतिः यस्याः सा स्रुशोभना दंता यस्याः सा संबुद्धौ तदुक्तं रत्नाकरे भ्रौभ्नौ यानांत्रयेण त्रिमुनियति स्रग्धरा कीर्तितेयम् ४५ ॥ ॥ ॥ ॥

| म | र | भ | न | य | य | य गण |
|---|---|---|---|---|---|---|
| ऽ ऽ ऽ | ऽ । ऽ | ऽ । । | । । । | । ऽ ऽ | । ऽ ऽ | । ऽ ऽ |
| १ २ ३ | ४ ५ ६ | ७ ८ ९ | १० ११ १२ | १३ १४ १५ | १६ १७ १८ | १९ २० २१ |

यति ७.७.७.

॥ इति श्रीश्रुतबोधछंदोग्रंथस्यव्याख्यासमाप्ता ॥ ॥

## ॥ गणनामदेवफलानि ॥

मोभूमिःश्रियमातनोतियंजलंवृद्धिंरचाग्निर्मृतिं सोवायुःपरदेशदूरगमनंतव्योमशून्यंफलं ॥जःसूर्योरुजमाददातिविपुलंभेंदुर्यशोनिर्मलं नोनाकश्चसुखप्रदःफलमिदंप्राहुर्गणानांबुधाः॥ १ ॥ छ ॥

॥ ॥अथगणसंख्यानामरूपदेवफलज्ञापकयंत्रम्॥ ॥

| | गणनाम | रूपं | देवता | फलं | मित्रादि | फलं | |
|---|---|---|---|---|---|---|---|
| १ | मगण | ऽऽऽ | मही | लक्ष्मी | मित्रं | शुभं | |
| २ | नगण | ।।। | स्वर्ग | बुद्धिः | मित्रं | शुभं | |
| ३ | भगण | ऽ।। | शशी | यशः | दासः | शुभं | |
| ४ | यगण | ।ऽऽ | जलं | आयुः | दासः | शुभं | |
| ५ | जगण | ।ऽ। | रविः | रुजं | उदासः | अशुभं | |
| ६ | रगण | ऽ।ऽ | अग्निः | दाहः | शत्रुः | अशुभं | |
| ७ | सगण | ।।ऽ | वायुः | विदेशः | शत्रुः | अशुभं | |
| ८ | तगण | ऽऽ। | नभः | शून्यं | उदासः | अशुभं | |

श्रीगणेशायनमः सिद्धौषधानिभवदुःखमहागदानांपुण्यात्मनांपरमकर्णरसायनानि प्रक्षालनैकसलिलानिमनोमलानांशौद्धोदनेःप्रवचनानिचिरंजयंति १ ॥

॥ श्रीगणेशायनमः श्रीगोकुलेशपदपद्ममधुव्रतेनतारामिधेनकविनाशिवराजधान्यां विद्वत्कुलोपकृतयेक्रियतेस्फुटार्थाटीकाविदग्धमुखमंडनसंज्ञकस्य १ विमत्सराणांविदुषांचित्तेटीकाकृतामया सुदंवितनुतांनित्यमेषाविद्वन्मनोहरा २ जैनकृतेस्मिन्काव्येसम्यग्ज्ञातुंमनीषदाविज्ञाः विद्वन्मनोहराख्यांट्टष्टुंयत्नंतराकुरुत ३ इहग्रंथस्यकर्त्तानिर्विघ्नपरिसमाप्त्यर्थंकायिकवाचिकमानसिकपापापहारित्वरूपंस्वेष्टदेवताप्रशंसात्मकंमंगलमाचरतिसिद्धौषधानीति शौद्धोदनेःशाक्यमुनेःप्रवचनानि।प्रकृष्टानिवचानिचिरंचिरकालंजयंतिसर्वोत्कर्षेणवर्त्तंतइत्यर्थः।शाक्यमुनिस्तुपः।सशाक्यसिंहःसर्वार्थसिद्धःशौद्धोदनिश्चसइत्यमरः कीदृंशिप्रवचनानि।भवदुःखमहागदानांसिद्धौषधानि।भवस्यसंसारस्यजन्मनोवादुःखान्येवमहागदामहारोगास्तेषांसिद्धौषधानिऔषधंजरसंयोगोपेत(?)सारहितानीत्यर्थः।भवःक्षेमेशसंसारसत्तासंप्राप्तिजन्मसुवितिमेदिनिः।रोगव्याधिगदामयाः।महारोगास्तुदेहजाभवंति।एतेनकायिकपापहरित्वमुक्तंभवति

जयंतिसंतः सुकृतैकभाजनंपरार्थसंपादन
सद्बुतस्थिताः ॥ करस्थनीरोपमविश्वदर्शि

पुनः कीदृशिपुराणात्मनां परमकर्णरसायनानि।
पुराणात्मनां परमानिउत्कृष्टानिचतानिकर्णयोः र
सायनानि। पूतात्मनांश्रवणपुटपेयानीत्यर्थः शब्दग्रा
हित्वंकर्णद्वाराभवतिएतेनवाचनिकपापापहारित्व
मुक्तंपुनः कीदृशि। मनोमलानांप्रक्षालनैकसलि
लानि मनसिचित्ते मलंयेषांतेमनोमलाः मलिनचि
त्तास्तेषांप्रकर्षेणक्षालनंप्रक्षालनंतदर्थमतिनिर्म।
लीकरणार्थेएकानिचताःसलिलानि। मुख्यजलानि।
जलांतरापेक्षारहितानीत्यर्थःएकेमुख्यान्यकेवलं
इत्यमरः। मनोनिर्मलीकरणान्मानसिकपापहारि
त्वमुक्तं। ननुसोद्घोदनेः स्वरूपादितत्कर्मप्रशंसादिक
मनुक्त्वा कविस्तत्स्ववचनप्रशंसांकथमुक्तवानित्युच्य
ते। महापुरुषाणांस्वरूपादिकंतत्क्रियादिकंचसर्वमे
छिकत्वादध्रुवं। क्वाचित्कंच। वचनंतुनथ्यमितिनीतेः
एतेमहाशयवाक्यपरिपालनद्वारासकलाभीष्टसि।
द्धिःसूचितेतिभावः १

साधवोहृदयोमह्यंइतिविष्णूक्तिस्मृत्वाद्वितीय
श्लोकार्द्धेनसाधूंस्तौति। उत्तरार्द्धेनचकवेर्गिरःप्र।
स्तौति। जयंतीति। सुकृतस्यपुण्यस्यैकंमुख्यंभाज
नंपात्रंयथास्यात्तथासंतःसाधवोजयंति। कीदृशाः।

नीजयंतिवैदग्ध्यभुवः कवेर्गिरः ॥ २ ॥
आक्रांतेवमहोपलेनमुनिनाशप्तेवदुर्वास
सासातस्यंवतसुद्रितेवजंतुनानी लेवमूर्छी
विषैः॥ बद्धेवातनुरज्जुभिःपरगुणान्वक्तुं
नशक्तासतीजिह्वालोहशलाकयाखलमु
खेविद्धेवसंलक्ष्यते ॥ ३ ॥ ॥

परार्थसंपादनसद्व्रतस्थिताः। परेषामर्थःपरार्थःपरा
र्थस्यसंपादनमेवसद्व्रतंसाधुव्रतंपरार्थसंपादनसद्व्र
तंतत्रतिष्ठतीपरार्थसंपादनसद्व्रतस्थिताः। सत्साधौ
विद्यमानेचेस्यमरः। कवेःपंडितस्यगिरोवाचोजयंति
। संख्यावान्पंडितःकविःगीर्वाग्वाणीसरस्वतीसमरः
कीदृशस्यकवेः। करस्यनीरोपमविश्वदर्शिनः करेतिष्ठ
तीतिकरस्थंकरस्थंचतत्नीरंजलंचकरस्थनीरं। कर
स्थनीरस्यक्षणभंगुरत्वात्उपमायस्मिन्तत्करस्थ
नीरोपमं। करस्थनीरोपमंविश्वंपश्यतीतिकरस्थ।
नीरोपमविश्वदर्शीतस्यकरस्थनीरोपमविश्वदर्शि।
नः। कीदृश्योगिरःवैदग्ध्यभुवःविदग्धस्यचतुरस्य
भावोवैदग्ध्यंवैदग्ध्याद्भूरुत्पत्तिर्यासांताःचातुर्यो।
त्पन्नाइत्यर्थः ॥ २ ॥ ॥
इदानींखलमुखेपरगुणाकथनालसांजिह्वामा
लोक्यकविःसाशंकमुत्प्रेक्षते। आक्रांतेति। खलमु।
खेदुर्जनवदनेसतीविद्यमानापिजिह्वापरगुणान्य

इहानेकेसत्यंसततमुपकारिण्युपकृतिकृ
तज्ञाःकुर्वंतोजगतिनिवसंत्येवसुधियः॥ ॥

रेषांगुणान्वक्तुंनशक्तानसमर्थो ऽतःलोहशलाक
याविध्येवसंलक्ष्यते।मयेतिशेषः।पिशुनोदुर्जनः।
खलइत्यमरः किंवा-महोपलेनमहतापाषाणेन।
आक्रांता।पाषाणप्रस्तरग्रावो पलाश्मानइत्य
मरः किंवादुर्वाससामुनिनाशप्ताआघारभ्यत्वया
कस्यापिगुणानवाच्याइति।किंवाससतस्यभावः
सातत्यंजतुनालाक्ष या वतेतिखेदेमुद्रिता।लाक्षा
राक्षाजतुक्लीवइत्यमरःकिंवाविषैःहालाहलादि
भिःमूर्छांनीताप्रापिता किंवाअतुरज्जुभिःस्थूल
रज्जुभिर्बद्धानिष्ठतियतःपरेषांगुणान्कथयितुंन।
क्षमा॥ ३ ॥ ॥

अधुनाकविःपुरुषेषुमध्यमाधमोत्तमभेदेन
त्रैविध्यंप्रदर्शयति॥ ॥इहेति इहलोकेअनेकेकृत
ज्ञाःकृतंजानंतीतिकृतज्ञाःअनेकेबहवःसततंउप
कारिणिपुरुषेउपकृतिंप्रत्युपकारंकुर्वंतोनिवसंती
तिसत्यं.उपकारिषुयःसाधुस्त्वेतस्यकोगुणइतिस्म
रणात् तस्मादेतेमध्यमाः।जगतिसंसारेअनेकेसु
धियोविद्वांसोनिवसंत्येवइतिसत्यं।आत्मार्थेको
नजीवतीतिस्मृतेस्तस्मादेतेनिकृष्टाःयेषांस्वार्थंवि।
नापरकृत्यव्यसनिता।व्यसनमस्यास्तीतिव्यसनी

साधुः

किंयंतस्ते संतः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ४
वध्वांजलिं सममसज्जनसज्जनौ तौ वंदे नि
तांतकुटिलप्रगुणस्वभावौ ॥

व्यसनिनो भावः व्यसनिता परेषां कृत्यं परकृत्यं। पर
कृत्यस्य व्यसनिता परकृत्यव्यसनिता भवति नेतथा
विधाः संतः सत्पुरुषाः कियंतो विरलाः उक्तं च नीतौ
॥ साधवो न हि सर्वत्र चंदनं न वने वने त्यु इति। एके सत्पु
रुषाः परार्थघटकाः स्वार्थं परित्यज्य ये इति भर्तृहरिः।
कीदृशाः संतः। सुकृतस्य परिपाके निष्पन्नो प्रणयः प्रेमा ये
षां ते सुकृतपरिपाकप्रणयिनः प्रणयास्त्वमी। विश्रंभ
यांच प्रेमाण इत्यमरः एते उत्तमा उक्ताः ४ ॥ ॥

परस्य गुणदोषांश्च न प्रशंसेन्न गर्हयेदिति संचिंत्य
पूर्वोक्तौ खलसुजनौ नमस्कुर्वन्नाह बध्वेति। अहमंज
लिं बध्वा। एषोंजलिरिति पाठे मया बद्ध इति शेषः तौ पू
र्वोक्तौ असज्जनसज्जनौ खलसुजनौ समं तुल्यं निर्वि
शेषमिति यावत्। वंदे नमस्करोमि। वदि अभिवादन
स्तुत्योः कीदृशौ तौ। नितांतं अत्यर्थं कुटिलो वक्रः प्र
गुणो ऋजुश्च स्वभावो ययोस्तौ। आविद्धं कुटिलं भुग्नं
वेल्लितं वक्रमित्यपि। ऋजावजिह्मप्रगुणा वित्यमरः
। उभयोरभिवंदने व्यवस्थामाह सकमिति। तयोः ख
लसुजनयोर्मध्ये एकं प्रथमं असज्जनं भियाभी।

एकं भियानिरभिसंधितवैरिभूतं प्रीत्यापरं परम निर्वृतिपात्रभूतम्॥ ५ ॥ ॥
किं मेथवा हतखलप्रणतावपि स्यात्स्वी करोति सुजनो यदि मां गुणज्ञः ॥ ।

त्यावंदे। कीदृशमेकं। निरभिसंधितवैरिभूतं। अभिसंधानं कर्त्तुमशक्तो यो वैरिशत्रुः तन्मायं। मृदुत्वस्तुखभेद्योदुःसंधानश्च दुर्जनो भवतीति भर्तृहरिः। अपरं द्वितीयं सज्जनं प्रीत्या हर्षेणवंदे। मुत्प्रीतिप्रमदो हर्षइत्यमरः। कीदृशमपरं। परमाचासौ निर्वृतिश्च परमनिर्वृतिः परमनिर्वृतेः परमसुखस्य पात्रभूतं स्थानमाश्रयमित्यर्थः। खलसुजनौ स्वभावतो दुःखसुखहेतू भवत इतिभावः उक्तं च नीतौ परोद्वेगे परानंदे खलसज्जनयोर्द्वयोः। स्वभावस्वशरणं। विषपीयूषयोरिव॥ ५ ॥ ॥

मृदुत्वस्तुखभेद्योदुःसंधानश्च दुर्जनो भवतीत्युक्तेरभिसंधातुमशक्यश्चेत्खलस्तदा तदभिवादने किं स्यादित्यत आह। किमिति अथवेति पक्षांतरे। यदि मां सगुणज्ञः गुणान् जानातीति गुणज्ञः सुजनः साधुः स्वीकरोति अंगीकरोति। तदा। हतखलप्रणतावपि। हतश्चासौ खलश्च हतखलः हतखलस्य प्रणतिः हतखलप्रणतिस्तस्यां हतखलप्रणतौ। धिक्कृतखल नमस्कारेऽपि मे मम किं स्यात्।

चंद्रेणचारुचरितेनविकासितंसत्संकोचितंभ
वतिकिंकुमुदंतमोभिः॥ ६ ॥ ॥
प्रीत्यैसतांतदनुभावगतावसादःसंत्यज्यगूढर
चनोप्रतिभानुरूपं॥ क्षिप्रावबोधकरणक्षम

पितुनकिमपि। तत्रदृष्टांतमाह। यथाचारुचरितेन।
चारुहृद्यंचरितंवृत्तंयस्यसचारुचरितस्तेनचारुचरि
तेनचंद्रेण। विकासितंविकासभावंप्राप्तंसत्कुमुदंकै
रवं। इंदीवरंचनीलेस्मिन्सितेकुमुदकैरवइतिअमरः
। तमोभिरंधकारैःसंकोचितंकिंभवति। अपितुनभव
त्येव। तथायदिगुणज्ञोमत्कृतकाव्यस्यस्वीकारंकरो
तितदादुर्जनानंगीकारेममकाक्षतिरितिभावः ६
सुजनस्वीकारबलमवलंब्यकविर्ग्रंथस्या
भिधानंप्रकटयन्नाह प्रीत्यैसतामिति अहंविदग्धमु
खमंडनंनामकाव्यंवक्ष्ये। किंकृत्वागूढरचनांदुर्ज्ञेयर
चनांसंत्यज्य। प्रतिभाबुद्धेरुत्कर्षस्तदनुरूपंयथास्या
त्तथावक्ष्ये। किमर्थंसतांप्रीत्यैसाधूनांपरितोषाय।
कीदृशोहंतदनुभावगतावसादःतेषांसाधूनांअनु
भावोनुग्रहस्तदनुभावःतदनुभावेनगतःअवसा
दोविषादोयस्यसः। कीदृशंविदग्धमुखमंडनंक्षिप्रा
वबोधकरणक्षमं। क्षिप्रंशीघ्रंयोवबोधःसम्यग्ज्ञानं
तत्करणक्षमंतत्संपादनसमर्थः॥ पुनःकीदृशंअ
प्रपंचंनविद्यतेप्रपंचोविस्तारोयस्मिंस्तत् अप्रपंचं।

मीस्थितार्थेवक्ष्येविदग्धमुखमंडनमप्रपंच ७।
॥ यद्यस्तिसभामध्येस्थातुंवक्तुंमनस्तदासुधियः
॥ तांबूलमिवगृहीत्वाविदग्धमुखमंडनंविशत
॥ ८॥ प्राहुर्व्यस्तंसमस्तंचद्विर्व्यस्तंद्विःसमस्त
कं॥तथाव्यस्तसमस्तंचद्विर्व्यस्तंद्विः समस्तकं
॥९॥ सद्विःसमस्तकव्यस्तमेकालापंप्रभिन्न
कं॥ भेद्यभेदकमोजस्विसालंकारंसकौतुकं ॥
॥१०॥ प्रश्नोत्तरसमंपृष्टप्रश्नंभग्नोत्तरंतथा ॥
आदिमध्योत्तराख्येद्वेअंतोत्तरमतःपरं॥ ११॥
कथितापहुतिंचैवविषमंवृत्तनामकं॥नामा
ख्यातंचतार्क्यंचसौत्रशाब्दीप्रशास्त्रजे॥ १२॥
वर्णवाक्योत्तरेतद्वत्श्लोकोत्तरमतःपरं॥
खंडपादोत्तरेचक्रंपद्मंकाकपदंतथा॥ १३॥
गोमूत्रीसर्वतोभद्रंगतप्रत्यागतंबहु॥ वर्द्धमा
नाक्षरंतद्वद्धियमानाक्षरंतथा॥ १४ ॥ शृंख
लानागपाशंचचित्रंसंशुद्धमेवच॥ ॥

अविस्तरमित्यर्थः।विपर्यासेचविस्तारेप्रपंचइत्यम
रः॥७॥ अधुनाग्रंथकारोग्रंथप्रचारार्थंसाभि
प्रायमाह यदीतिविशत।विशउपवेशने।उपविश
तेत्यर्थः।अन्यत्सुगमं॥ ८॥ कविरग्नेवक्ष्यमाणा
न्प्रमेयानतुक्रामतिप्राहुरिति नह्विदइत्यर्थः॥ व्य
स्तादीनांलक्षणमग्नेवक्ष्यति॥९॥१०॥११ ॥

प्रहेलिका तथा ह्यस्यां कालसारादि वर्णितं १५
अजमारादिकं गूढपदपादार्थगूढकं॥ स्तुति
निंदा तथा ह्यर्थसद्वापह्नुति बिंदुमत्॥ १६॥
क्रियाकारकसंबंधगुप्तान्यान्यामंत्रितस्य च।
गुप्तं तथा समासस्य लिंगस्य वचनस्य च १७
मात्राबिंदुविसर्गाणां च्युतकान्यक्षरस्य च॥
स्थानव्यंजनयोश्चापि च्युतदत्ताक्षरं तथा॥
॥ १८॥ उद्देशकं दृष्टं पदविभागेन केवले
नैव यद्भवेत्॥ विदुर्व्यस्तसमस्तं यत्समुदाये
न पृच्छ्यते॥ १९॥ पूजायां किं पदं प्रोक्तमस्त
नेको विभर्त्सुरः॥ ॥

शाब्दीयं शास्त्रजं चेति द्वे॥ १२॥ वर्णोत्तरं वाक्यो
त्तरं चेति द्वे। खंडोत्तरं पादोत्तरं चेति द्वे॥ १३॥ १४॥
॥१५॥ पदगूढं पादगूढं अर्थगूढं चेति त्रयं अपह्नु
तिप्रश्नेन सह बिंदुमत्प्रश्नमित्यर्थः॥ १६॥ १७॥
॥१८॥ तत्र तावदेकेनैव व्यस्तसमस्तजातिः श्लोकेनाह दृष्टमिति। विभक्तं यत्पदं। केवलेन पदविभा
गेन पदानां विभागः पदविभागस्तेन। यत्प्रष्टं तत्प्रश्नं
। पृश्नविदो व्यस्तं विदुर्जानीयुः विदज्ञाने यत्स
मुदायेन पृच्छ्यते तं प्रश्नं समस्तसंज्ञं विदुः॥ १९॥
तत्र तावद्व्यस्तस्योदाहरणमाह पूजायामिति। क
श्चनकमपि विद्वांसं पदविभागेन पृच्छति। पूजायां।

कआयुधतयाख्यातःप्रलंबासुरविद्विषः २०।
कोदुःस्थस्यमोहायकाप्रियासुरविद्विषः॥ पदंप्र
श्नवितर्कैकिंकोदंतच्छदभूषणं॥ २१॥ ॥

किंपदंप्रोक्तमित्येकःप्रश्नः। अस्तनंस्तनाभ्यांरहितंउरो
वक्षःकोविभक्तिइतिद्वितीयःप्रश्नः। प्रलंबासुरविद्विषोव
लभद्रस्यआयुधमस्त्रंतस्यभावआयुधतातेयाआयुधत
याकःख्यातोविश्रुतःइतितृतीयःप्रश्नःएतत्त्रयाणांप्रश्ना
नांप्रत्युत्तरंसुनासीरइतींद्रवाची। तत्रपदविभा
गःसुनासीरः। सुइत्ययंपूजावाची। पूजनेस्वतीद्रत्यम
रः। नापुमान्-नृशब्दस्यनाइतिरूपंसोपरे। शीरोहलं॥ब
लभद्रःप्रलंबघ्नइत्यमरःहालःफालवहःशीरइतिविक्र
मादित्यःएवंपदविभागेनैवप्रत्युत्तरत्रयंदत्तमित्यर्थः २०
व्यस्तप्रस्तस्यद्वितीयमुदाहरणमाह कइति। दुःखेन
स्थोदुःस्थःदुःस्थस्यनिर्धनस्यमोहायकःइतिपृष्टेप्र
त्युत्तरंरमानुरागइत्यत्रपदविभागः। रमा। नु। रागः। इति
पदचतुष्टयं। तत्रप्रथमप्रश्नस्योत्तरं। राःवित्तेरैशब्दस्यराइ
तिसोपरेरूपंराः पुंसिस्त्रीणेवित्तयोरितिमेदिनिः। पुनःपृच्छ
ति। सुरस्यविद्विट्सुरविद्विट्तस्यसुरविद्विषोमुरारेःप्रियाका
इतिपृष्टेप्रत्युत्तरंमालक्ष्मीःइंदिरालोकमातामेत्यमरःप्रश्न।
स्यवितर्कःऊहापोहःप्रश्नवितर्कस्तस्मिन्प्रश्नवितर्केकिंपद
मितिपृष्टेप्रत्युत्तरंनुइतिनुपृच्छायांविकल्पेचेत्यमरःदंतच्छ
दोऽधरओष्ठःधरोतुरदनच्छदौदशनवाससीइत्यमरःदंत

रामानुराग: इतिव्यस्तजाति: अपिसेवितादृढजिव्हैः क
दापिकयांतिनविकारं ॥ विच्छिद्यमानतनवः स्वगुणै
रधिकंविराजंते ॥ २२ ॥ मलयतरवः ॥
अनिभृतकोकिलनिस्वनमुखरितसहकारका
ननः पुंसाम् ॥ ॥ ॥

हृदस्याधरस्यभूषणं अलंकारः कः इतिएष्टेप्रत्युत्तरं
रागः रक्तिमातांबूलादेः एवंरीत्यान्यत्रापिज्ञेयं ॥ २१ ॥
इतिव्यस्तजातिः ॥ इदानीसमस्तप्रश्नस्योदाहरणमह
यंहृष्यामाह अपीति द्विजिव्हैः सर्पैः सेविता अपि । क
दापिकस्मिन्नपिकाले । केविकारंविकृतिंनयांति । या
प्रापणे छेदनमोटनघर्षणादिभिर्विछिद्यमानातनुः श
रीरंयेषांतेविछिद्यमानतनवः स्वगुणैः सौरभ्यशैत्यादि
भिरधिकंयथास्यात्तथाविराजंतेदीप्यंते । राज्दीप्तौ । द्वि
जिव्हासर्पसूचकौइत्यमरः । एवंएष्टेप्रत्युत्तरं । मल
यतरवः । अर्थाच्चंदनानि ॥ २२ ॥ ॥
अनिभृतेति । पुंसांहृदयहारीचित्तहारकः कोभवती
तिएष्टेप्रत्युत्तरं । मधुसमयः मधोर्वसंतस्यसमयः कालः
। देसेचैत्रेवसंतेचमधुः पुंसिमधुद्रुमइतिमेदिनिः । की
दृशोमधुसमयः अनिभृता अविनीतान्मर्यान्मत्तायेको
किलाः पिकास्तेषांनिस्वनैः कूजितैर्मुखरितानिमुख
रीकृतानिसहकारकाननानिआम्रतिसौरभाम्रवनानिय
त्रसः । निभृतविनीतप्रस्थिताः सभाइत्यमरः सहकारो

कोभवतिहृदयहारीमधुकरझंकारिकंकेल्लिः २३
मधुसमयः। इतिसमस्तजातिः ॥ ॥
व्यस्तंसमस्तमथवासमासपदभंगतः॥ ।

ऽतिसौरभइतिचपुनःकीदृशः।मधुकरैर्भ्रमरैर्झंकारिणःशब्दायमानाःकंकेल्लयःअशोकतरवोपत्रसः।कंकेल्लिर्वंजुलोशोकइतिहलायुधः॥ २३॥इतिसमस्तजातिः॥२३॥ ॥ इदानींद्विर्व्यस्तद्विःसमस्तजात्योर्लक्षणमाह व्यस्तमिति।समासस्यपदानांचभंगःखंडनंतरंगोवासमासकल्पनातरंगइतियावत्।तस्मात्समासपदभंगतः।यत्व्यस्तंप्रागुक्तव्यस्तप्रश्नरीत्याद्विःएष्टंद्विवारंएष्टंतदेवद्विर्व्यस्तसंज्ञकंस्यात्।अथवायत्समस्तंप्रागुक्तसमस्तप्रश्नरित्यासमासपदभंगतोद्विवारंएष्टंतदेवद्विःसमस्तसंज्ञकंस्यादित्यर्थः।तदेतयोरुदाहरणद्वयेस्पष्टीकृतंकविना।तद्यथा।कालीचासौकापालिकश्चकालिकापालिकस्तस्यमठःकालिकापालिकमठइत्यत्रकर्मधारयषष्ठीतत्पुरुषेव्यस्तप्रश्नरीत्याकालिका।अपालि।कमठइत्येकःसमासपदभंगः।पुनःकालि।कंपालिकमठइत्यपरःसमासपदभंगोद्विःएष्टत्वात्द्विर्व्यस्तसंज्ञउक्तः।एवंनवारितअवारितइत्यत्रनञ्तत्पुरुषेअवारि।तोरणइत्येकःसमासपदभंगः।रणेअवारितइत्यपरःसमासपदभंगोद्विःएष्टत्वातद्विर्व्यस्तसंज्ञःएवंसमस्तप्रश्नरीत्याविश्ववर

हि:पृष्टंयत्तदेवस्याद्बहिर्व्यस्तंबहि:समस्तकम् २४
वर्षासुकाभवतिनिर्मधुकीदृगब्जंशेषंबिभर्त्ति
वसुधासहितंकएकः। आमंत्रयस्वधरणी ॥

श्च आलीचनकुलीचइराचेत्येकःसमासपदभंगोब
हि। विवरेणालीनाःकुलीरयासुताइत्यमरःसमासप
दभंगोहि:पृष्टत्वाद्बहि:समस्तसंज्ञःप्रश्नःएवंबहिती।
योदाहरणेपिसमस्तप्रश्नरीत्याबहि:पृष्टत्वान्बहि:स
मस्तसंज्ञोज्ञेयः। २४ ॥ ॥
तयोर्बहिर्व्यस्त:बहि:समस्तप्रश्नयोस्तावद्बहिर्व्यस्तप्रश्न
स्यादायसुदाहरणमाह वर्षास्विति। वर्षासुप्रावृट्
कालेषुकाभवतीतिपृष्टेप्रत्युत्तरं।कालिका।मेघजा
लमित्यर्थः मेघजालेपिकालिकेत्यमरः। स्त्रियांप्रा
वृट्स्त्रियांभूम्निवर्षाइतिचनिर्मधुमधुहीनमब्जंकम
लंकीदृगितिपृष्टेप्रत्युत्तरं।अपालि अपगता अ
लयोभ्रमरायस्मात्तत्।कःएकोमुख्यःवसुधास
हितंपृथ्वीयुक्तंशेषंनागविशेषंबिभर्त्ति धरती
तिपृष्टेप्रत्युत्तरं।कमठःकूर्मःतदेवोत्तरंपुनःपृच्छ
तिधरणीधरनाथस्यहिमवतःपुत्रीमामंत्रयस्वआ
ह्वयस्वेतिपृष्टे प्रत्युत्तरं।कालिहैमवति।कालीहै
मवतीश्वरीत्यमरः।अत्रलोकेअस्थिभस्मभिर्निचि
तानिव्याप्तान्यंगानियेषांतेतादृशाश्चतेजनाश्चअ
स्थिभस्मनिचितांगजनास्तेषामाश्रयःकःस्यादिति

धरनाथपुत्रीकोत्रास्थिभस्मनिचितांगजनाश्रयः
स्यात् ॥ २५ ॥ कालिकापालिकमठः ॥ ॥
कीदृशंवदमरुस्थलंमतंद्वारिकुत्रसतिभूषणंभवे
त् ॥ ब्रूहिकांतसुभटःसकार्मुकःकीदृशोभवतिकु
त्रविद्विषां ॥ २६ ॥ अवारितोरणे। द्विर्व्यस्तजाति
॥ पक्षिश्रेष्ठसखीवभ्रुसुरावाच्याःकथंवद ॥ ॥

पृष्टेप्रत्युत्तरं। कापालिकमठः कापालिकस्यखल्वाटस्य।
मठःशिष्यादिनिवासस्थानंमठश्छात्रादिनिलयइत्यमरः
॥ २५ ॥ ॥ द्विर्व्यस्तप्रश्नस्यद्वितीयोदाहरणमाह
कीदृशमिति। हेकांत। सुंदर। मरुस्थलंधन्वदेशःकीदृश।
मितिपृष्टे। प्रत्युत्तरं। अवारं नविद्यतेजलंयत्रतत्।समा
नौमरुधन्वनावित्यमरः। द्वारिअर्थाद्गृहस्यबहिर्द्वारेकुत्र
सतिकस्मिनविद्यमानेभूषणंभवेत्। प्रत्युत्तरं। तोरणे। आ
म्रादिपल्लवकृतविताने। तोरणोऽस्त्रीवहिर्द्वारमित्यमरः
। पुनःपृच्छति। सकार्मुकःसधनुःसुभटोयोधाविद्विषांश
त्रूणांकुत्रकीदृशोभवतिब्रूहि। प्रत्युत्तरं। रणेअवारितः।
संग्रामेवारयितुमशक्यः। भटोयोधाश्चयोद्धाइत्यमरः। अ
थाऽस्त्रियां। धनुश्चापोधन्वशरासनकोदंडकार्मुकमिति
॥ २६ ॥ इतिद्विर्व्यस्तजातिः ॥ इदानींद्विःसमस्तप्र
श्नस्याद्यमुदाहरणमाहपक्षीतिपक्षीचश्रेष्ठश्चसखीच
वभ्रुश्चसुराचपक्षिश्रेष्ठसखीवभ्रुसुराःकथंवक्तव्याइति
पृष्टेप्रत्युत्तरं॥ विवरालीनकुलीराः। विः। पक्षी। विवि।

ज्येष्ठमासिगताःशोषंकीदृश्योल्पजलाभुवः ॥
॥ २७ ॥ विवरालीनकुलीराः ॥ ॥
विश्वंभराप्रलंबघ्नव्रीहिमानुषसंयतः ॥ ॥

करपत्रत्रयइत्यमरः। वरःश्रेष्ठः आ लीसखी-नकुलो बभ्रुः। स्त्रियांनकुलीइरासुरा। आलिःसखीवयस्येत्य मरः। विपुलैविकुलोवभ्रुःस्यात्पिंगलेत्रिष्विति॥ इराभू वाक्सुरापुस्यादितिच। पुनःपृच्छति। ज्येष्ठेमासिशोषंगता संशुष्काःअल्पमुर्वरितंजलंयासुताःअल्पजलाभूम्यः कीदृश्योवदेतिपृष्टःप्रत्युत्तरंतदेव। विवरालीनकुलीराइ तिविवरेषुविलेषुआलीनःसमंतान्निमग्नाःकुलीराः कर्कटायासुताः। स्यात्कुलीरःकर्कटकइत्यमरः॥ २७॥
॥ विवरालीनकुलीराः ॥ ॥
हिःसमस्तस्योदाहरणांतरमाहविश्वंभरेति। कृष्णनपृ च्छति। विश्वंभराप्रलंबघ्नव्रीहिमानुषसंयतः॥ विश्वंभ रापृथ्वी। प्रलंबघ्नोवलभद्रः व्रीहिः अर्थादन्नयवः। व्रीहि सामान्यधान्येस्यादाशुधान्येचपुंस्ययमितिमेदिनिः। मा नुषोनरः। संपत्शुद्धंचारताःकथंवाच्याभवंतीतिपृष्टे। प्रत्युत्तरं। कुवलयवनराजयः। कुःपृथ्वी। गोत्राकुःपृथि वीपृथ्वीइत्यमरः। बलःसंकर्षणः। संकर्षणःसीरपा णिःकालिंदीभेदनोवलः। यवःसितशूकोन्नविशेषः॥ शितशूकयवौसमाविस्यमरः। नरोमानुषः। आजिःस मितिः। स्त्रियःसंपत्समित्याजिसमिद्युधइत्यमरः। पुनः

कथंवाच्यामवंत्येतादिनादौविक संति।काः॥२८॥
कुवलयवनराजयः॥ हि:समस्तजातिः ॥पृष्टंप
दविभागेनसमुदायेनपद्भवेत्॥ विदुर्व्यस्त सम
स्तंतदुभयार्थप्रदर्शनात् २९॥ काप्रियेणार
हितावरांगनाधाम्निकेनतनयेननंदिता॥ ॥

पृच्छति।दिनादौप्रातःकालेकाःविकसंतीतिपृष्टे।प्रत्यु
त्तरंतदेव।कुवलयवनराजयः।कुवलयानामुत्पला।
नांवनानितेषांराजयोलेखाःस्यादुत्पलंकुवलयमि।
त्यमरः।लेखास्तुराजयइत्यपि॥ २८॥ ॥
इतिहिःसमस्तजातिः॥ इदानींव्यस्तसमस्तप्र।
श्नस्यलक्षणमाहपृष्टमिति।यत्पूर्वोक्तरीत्यापदविभा
गेनपृष्टंपश्चात्समुदायेनपृष्टंभवेत्।तत्उभयार्थप्रदर्श।
नात्।उभयोर्व्यस्तसमस्तप्रश्नयोरर्थप्रदर्शनंउभयार्थ
प्रदर्शनंतस्मात्।व्यस्तसमस्तंव्यस्तसमस्तसंज्ञकंप्रश्नं।
विदुस्तद्विदइतिशेषः॥ २९॥ ॥
व्यस्तसमस्तप्रश्नस्यप्रथममुदाहरणंतावदाहके।
ति।प्रियेणरहिताभर्त्राहीनाकावरांगनाकामिनीधा।
म्निगृहेकेनतनयेनपुत्रेणनंदितासुखिताजातेतिपृ।
ष्टे।प्रत्युत्तरं सकुंतलाभरतेन।शकुंतलाराज्ञीदुष्यं
तनाम्नाराज्ञारहिता।गृहेपितुर्गृहेभरतेनभरतनाम्ना
पुत्रेणानंदिताजाता।गृहदेहत्विट्प्रभावाधामानीत्य
मरः।पुनःपृच्छति।सदासर्वस्मिन्कालेकीदृशेनपुरुषे

कीदृशेनपुरूषेणपक्षिणां॥ वंधनंसमभिलष्यते
सदा॥ ३०॥ शकुंतलाभरतेन॥ कीदृशंहृदयहारि
कूजितंकः सखापशसिभूपतेर्मतः कस्तवास्तिवि
पिनेभयाकुलःकीदृशश्चनभवेन्निशाकरः॥ ३१ ॥
णपक्षिणांशकुंतानांवंधनंसमभिलष्यतेवांछाक्रियते।
प्रत्युत्तरंशकुंतलाभरतेन। शकुंतानांपक्षिणांलाभःशकुंत।
लाभस्तद्भरतेनतत्परेण। शकुंतिपक्षिशकुनिशकुंतशकुनिद्वि
जाइत्यमरः॥ ३०॥ व्यस्तसमस्तप्रश्नस्यद्वितीयमुदाह
रणमाह कीदृशमिति। कश्चनराजपुरुषः कमपिराजानंपृ
छति। हेराजन्हृदयहारिहृदयंगमंकूजितंमधुरध्वनिवि।
शेषः।कीदृशमितिपृष्टे। प्रत्युत्तरं। कलं। अस्फुटमधुरध्व
निः। ध्वनौतुमधुरास्फुटेकलइत्यमरः। पुनःपृच्छतिकी
र्तौभूपतेः पृथ्वीपतेः कः सखासुहृन्मतइतिपृष्टे। प्रत्युत्त
रंकविः पंडितः। संख्यावान्पंडितः कविरित्यमरः पुनःपृ।
छति। तवविपिनेकाननेभयाकुलभयविव्हलःकोस्ती।
तिपृष्टेप्रत्युत्तरं। अहितःशत्रुः विपिनेकाननंवनं। पुनःपृ
छति। कीदृशश्चनिशाकरश्चंद्रोनभवैतिपृष्टेप्रत्युत्तरंसकलं
कविरहितः कलंकेनलांछनेनविशेषे णरहितोनभवेदेव
। कलंकाकोलांछनंचेत्यमरः॥ ३१॥ ॥
इतिव्यस्तसमस्तजातिः॥ ३१॥ ॥इदानींद्विर्व्यस्तस
मस्तप्रश्नस्यलक्षणमाह द्विर्व्यस्तमिति। यत्पूर्वंद्विर्व्यस्तंपृ
ष्टंपश्चाद्यत्समुदायेनपृष्टंभवेत्। एवंत्रिधाभिन्नवारत्रयंपृ
ष्टंतदेवप्रश्नेद्विर्व्यस्तसमस्तकंनामप्रश्नमुक्तंकविभिरिति

कलंकविरहितः इतिव्यस्तसमस्तजातिः ॥ ३१ ॥
द्विर्व्यस्तमेवयत्रस्यात्संसमुदायेनयद्भवेत् ॥ त्रिधा
भिन्नंतदेवोक्तंद्विर्व्यस्तकसमस्तकं ॥ ३२ ॥ ॥
कोशंकरस्यवलयावपयोधरःकःकीदृक्करस्यनिय
तंवशमेतिभूपः॥संबोधयोरगपतिंविजयीचकीदृ
ग्दुर्योधनोनहिभवेद्वदकीदृशश्च॥३३॥ अही
नास्तनयः॥ द्विर्व्यस्तसमस्तजातिः ॥ ७ ॥
कोमोहापहुरीश्वरस्यविहितःसंबोधनीयोगुरुः ॥

शेषः ॥ ३२ ॥ ॥ तावदेवतस्यप्रथममुदाहरण
माह काविति।शंकरस्यवलयौकौइतिपृष्टेप्रत्युत्तरंअ
हीसर्प्पौ वलयःप्रकोष्ठाभरणं।कटकंवलयोऽस्त्रिया
मित्यमरः।पुनःपृच्छति। अपयोधरः अस्तनःकः।प्रत्यु
त्तरं।नापुमान्।स्तनमेषोपयोधरौ।नियतंनिश्चितंकीदृ
क्भूपःपरस्यान्यस्यवशंअधीनतामेतिगच्छति।प्रत्युत्तरं।
स्तनयःस्तःनयोनीतिर्यस्मात्।नीतिरहितइत्यर्थःपु
नःपृच्छति।उरगपतिंसर्पराज्ञानंसंबोधयेतिपृष्टे प्रत्यु
त्तरं।हेअहीनवासुके।सर्पराजस्तूवासुकिः।इनःसूर्ये
प्रभौराज्ञीत्यमरः।चपुनः।विजयीकीदृक्।प्रत्युत्तरं।अ
स्ततनयःसमुदितनयः।च पुनरर्थेहिहेतावववधारणेदु
र्योधनःकुरुराजःकीदृशोनभवेदेव।वदेतिपृष्टे।प्रत्युत्तरं।
अहीनास्ततनयःहीनाःस्स्याधस्यतनयःहीनास्ततनयःन
हीनास्ततनयःअहीनास्ततनयःसनेत्रस्यपुत्रोदुर्योधनोनभवेदेव

कोधात्र्यांविरलःकलौनवघनःकिंवत्क्वकीदृग्द्वि
जः किंरेखावचनंभवेदतिशयंदुःखायकीदृक्ख
लःकोविघ्नाधिपतिर्मनोभवसमोभूत्योभवान्कीदृ
शः॥३४॥ ॥ ॥ ॥

अस्तसमस्तज्ञातेरुद्राद्दुरणांतरमाहकइतिदुरीश्वरस्यदुः
खेनईश्वरःतस्यदरिद्रस्यमोहाय अज्ञानायकःविहितःइति
पृष्टे० प्रत्युत्तरं।राःवित्तं पुनःपृच्छतिगुरुःसंबोधनीयःका
थमित्यध्याहारः।प्रत्युत्तरंहेजीवेतिवचसा।पुनःपृच्छति।
कलौकलियुगेधात्र्यांपृथिव्यांविरलःकियान्कःप्रत्युत्त
रं।सन्सुधीः।सन्सुधीकोविदोबुधइत्यमरः।धात्रीचधा
तकीप्रोक्ताधात्रीचामलकीमता॥धात्रीवसुंधराज्ञेया।
धात्रीस्यात्स्तनपायिनीतिनानार्थः।नवघनःनूतनोमेघः
किंवत्।किमिवेतिकिंवत्।वस्त्वत्ययस्तुल्येर्थे।प्रत्युत्तरं।
इभवत्।इभःकुंजरस्तद्वत्शामइत्यर्थः।कुंजरोवारणः
करीइभःस्तंबेरमःपद्मीत्यमरः।कीदृक्पुरुषोद्विजोन।
ब्राह्मणोनभवतिप्रत्युत्तरं।अनः।अः श्मश्रुस्तस्मादन्योऽ
नोविश्मश्रुरहितोद्विजोनभवत्येव।अनइति।अनखरेइ।
तिसूत्रेणानञोऽनादेशः अश्वादन्योअनश्वइतिवत्
ब्राह्मणोमामकीतनुरितिवचनात्।अकारोवासुदेवः
स्यादित्येकाक्षरकोषः।लेखावचनंकिं।राजीलेखा।की
दृक्खलःअतिशयंदुःखायभवेत्।प्रत्युत्तरंवसन् नि
करेवसन्सन्।विघ्नाधिपतिःकः प्रत्युत्तरं।इभवदनः।

राजीवसन्निभवदनः। द्विर्व्यस्तसमस्तजातिः ३४

द्विःसमस्तं यदा पृष्टं व्यस्तकेन पुनर्भवेत्॥ तद्विःस
मस्तकव्यस्तं कथितं प्रश्नपंडितैः॥ ३५॥
कीदृक्षः सकलो जनो भवेत्सुराज्ञः कः कालो वि
दित इहांधकारहेतुः॥ कः प्रेयान्कुमुदवनस्य।

राजमुखः। मनोभवेन समः मूर्त्या शरीरेण भवान्कीदृ
शः प्रत्युत्तरं। राजीवसन्निभवदनः। राजीवेन कमलेन
संनिभं तुल्यं वदनं यस्य सः। इति द्विर्व्यस्तसमस्तजा
तिः॥ ३४॥ ७॥ द्विःसमस्तव्यस्तप्रश्नस्य ल
क्षणमाह द्विरिति। यदा पूर्वं द्विःसमस्तं वारद्वयं पृष्टं पुनः
व्यस्तकेन रीत्या पृष्टं भवेत्। तत् द्विःसमस्तकव्यस्तं ना
म प्रश्नं प्रश्नविद्भिः कथितं ३५॥ ॥
इदानीमेतस्योदाहरणमाह॥ कीदृक्ष इति। शोभनो
राजा सुराजा तस्य सुराज्ञः सकलजनः समस्तलोकः की
दृशो भवेदिति पृष्टे। प्रत्युत्तरं। विधुरविरहितः विधुरेण।
वियोगजदुःखेन विरहितो हीनः। विधुरं तु प्रविश्लेष इ
त्यमरः इह लोके कः कालः अंधकारस्य हेतुः कारणं।
विदितः प्रसिद्धः। प्रत्युत्तरं तदेव। विधुरविरहितः विधु
श्चंद्रः रविः सूर्यस्ताभ्यां रहितः। कुमुदवनस्य प्रेयान्कः
प्रत्युत्तरं। विधुः चंद्रः। विधुः सुधांशुः शुभ्रांशुरित्य।
मरः। भ्रातृव्यं वैरिणं शिरसा को निहंति वदेति पृष्टे। प्र
त्युत्तरं। अविर्मेषः भ्रातृव्यो भ्रातृजद्विषावित्यमरः

कोनिहंतिभ्रातः खंवरशिरसा जितस्त्वपाकः। ३६॥ विधुरविरहितः॥ संग्रामेस्फुरदसिनाहता। स्त्वपाकेकेदुःखंवतनिरयेनरस्यकुर्युः॥ कस्मिन्नुद्भवतिकदापिनैवलोमख्याताः केजगतिमहालघुत्वभाजः॥ ३७॥ ७॥ ८॥

अविशब्दोरवोमेषपर्वतेपिनिगद्यतेइत्यनेकार्थध्वनिमंजरी। हेराजन् त्वपाकः जितः। प्रत्युत्तरं। अहितः शत्रुः। द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवइत्यमरः॥ ३६॥ द्विःसमस्तप्रश्नस्यद्वितीयमुदाहरणमाह। संग्रामइति। कश्चननरः कमपिखड्गहस्तंपृच्छति स्फुरद्रूपः असिः खड्गो यस्यसस्फुरदसिस्तेनस्फुरदसिनात्वया संग्रामेयुद्धेकेहताइतिपृष्टे। प्रत्युत्तरं नरकरेणवः। खड्गहस्तोवदति। हेनरकरेणवः हस्तिनः पुनःपृच्छतिवतेतिखेदे। निरयेनरकेनरस्यदुःखंपीडांकेकुर्युरितिपृष्टे। प्रत्युत्तरं। नरकरेणवः। नरकस्यनरकभूमेःरेणवः पांशवः। रेणुर्द्वयोः स्त्रियांधूलिः पांसुर्नानद्वयोरजइत्यमरः। कदापिकस्मिन्नपिकाले। कस्मिन्नंगेलोम। तनूरुहंनैवउद्भवतिनैवोत्पद्यते। प्रत्युत्तरं। नरकरे। नरस्यमनुष्यस्यकरेहस्ते। तनूरुहंरोमलोमेत्यमरः। जगतिसंसारेमहालघुत्वभाजः केख्याताः महालघोर्भावः महालघुत्वंमहालघुत्वंभजंतीतिमहालघुत्त्वभाजः। के। प्रत्युत्तरं। नरा। णवः परमाणवः स्त्रियांमात्रात्रुटिः पुंसिलवलेश

नरकरेणव: ॥ इतिद्विः समस्तव्यस्तजातिः ॥ ३७ ॥
एकश्रुत्यावचोयत्रभिन्नार्थप्रतिपादकं ॥ प्रभेदं
द्विःसमस्तस्यतमेकालापकंविदुः ॥ ३८ ॥
कीदृशीनिरयभूरनेकधासेव्यतेपरमपापकर्मभिः
।प्रेतराक्षसपिशाचसेविताकीदृशीचपितृकान
नस्थली ॥ ३९ ॥ नरकपालरचिता। केसरद्रुम
नलेषुसंस्थितःकीदृशोभवतिमत्तकुंजरः ॥

करागाणवइत्यमरः॥ ३७ ॥ इतिद्विःसमस्तकव्यस्तजा
तिः ॥ ३७ ॥ ॥ यत्रयस्मिन्प्रश्नेएकश्रुत्याएकोत्तरे
णभिन्नार्थप्रतिपादकंवचःद्विःसमस्तस्यप्रभेदंवदन्तिप्र-
श्नंएकालापकसंज्ञंविदुः॥ ३८ ॥ अस्योदाहरणद्वयश्लो
कद्वयेनाहकीदृशीति।कीदृशीनिरयभूःनरकभूमिः। अ
नेकप्रकारइतिअनेकधा।परमपापकर्मभिःसेव्यते।प्रत्यु
त्तरं।नरकपालरचिता।नरकाणांपालारक्षकास्तैःरचिता
कृता।चःपुनरर्थे।प्रेतराक्षसपिशाचैःसेवितापितृकान
नस्थलीप्रेतारण्यवेदिःकीदृशीप्रत्युत्तरं।नरकपालर-
चितानराणांकपालैःरचिताकृता ॥ ३९ ॥ ॥
केसरोवकुलद्रुमः।केसरद्रुमनलेषुसंस्थितोमत्तकुं
जरःकीदृशोभवति।प्रत्युत्तरं।दानवकुलभ्रमरहितः।
दानेनमदेनवकुलद्रुमस्यायेभ्रमरास्तेषांहितःप्रियःसमि
तिसंग्रामेतत्वतःइदमित्यज्ञानेनलक्ष्मणेनस्वचिह्नैःशि
वंअवेक्ष्यज्ञात्वाअर्ज्जुनःकीदृशोभवेत्।प्रत्युत्तरं।दानव

न त्वनः शिवमवेक्ष्य लक्षणैर् ज्ञेनः सभिनि कीदृशो भवेत् ॥ ४० ॥ ॥ दानवकुलभ्रमरहितः॥ इत्येकालापकजातिः॥ शब्दार्थैर्लिंगवचनैर्व्यस्तैर्यद्वा समस्तकैः॥ विभक्त्या च प्रभिन्नं यत्तत्प्रभिन्नकमुच्यते ॥ ४१ ॥

कुलभ्रमरहितः। दानवकुले दैत्यान्वये यो भ्रमस्तेन रहितः॥ ४० ॥ इत्येकालापकजातिः॥ ७ ॥

प्रभिन्नकप्रश्नस्य लक्षणमाह। शब्दार्थैरिति। यत्प्रश्नं व्यस्तैः पदविभागैः कृत्वा प्रभिन्नं भवति पृथक् प्रश्नं स्यात्। यद्वा समस्तकैः समुदायप्रश्नरीत्या प्रभिन्नं स्यात्। कीदृशैः व्यस्तैः समस्तकैः शब्दार्थलिंगवचनैः शब्दार्थश्च लिंगवचनं च शब्दार्थलिंगवचनानि तैः शब्दार्थलिंगवचनैः। कस्मिंश्चित्प्रश्ने शब्दार्थव्यस्तरीत्या प्रभिन्नं क्वचित् शब्दार्थसमस्तरीत्या प्रभिन्नं। क्वचिल्लिंगभेदेन प्रभिन्नं। क्वचिद्वचनभेदेन प्रभिन्नं। क्वचित् शब्दार्थलिंगाभ्यां प्रभिन्नं। क्वचित् शब्दार्थलिंगवचनैः प्रभिन्नं। क्वचिद्विभक्तिभेदेन प्रभिन्नं यत्तत्प्रभिन्नकसंज्ञकमुच्यते। एवं सप्त भेदाः प्रभिन्नकप्रश्ने भवंति। शब्दार्थभेदो यथा। देवशब्दो मेघवाची सुरवाची राजवाची च। लिंगभेदो यथा। तपइत्सकारांतो निदाघवाची पुंल्लिंगः। तपः सांतं तपस्यावाचि नपुंस[illegible]वचनभेदो यथा। नर इति प्रथमैकवचनं। अकारांतस्य प्रथमा बहुवचनं च नानरैः। नर इति। विभक्तिभेदो यथा। मास इति रूपं प्रथमा पंचमी षष्ठी विभक्तिषु भवति

निर्ज्जितसकलारातिः पृच्छतिकोनेकोमृत्योर्भय।
मृच्छति। मेघात्ययपक्ततचिराशायाः किंतिमिरक्षय
कारिनिशायाः ।। ४२ ।। ।। विधुताराते ज्जः ।।
विहगपतिः कंहतवानहितंकीदृग्भवतिपुरंजनसहितं
।। किंकठिनंविदितंवद धीमन्द्वादःपतिरपिकीदृग्भय
कृत्।। ४३।। ७ ।। ७ ।। ७ ।।

शब्दार्थेलिंगभिन्नस्योदाहरणद्वयंश्लोकद्वयेनाह।नि
र्ज्जितेतिनिर्ज्जिताःसकलारातयःसमस्तशत्रवोयेनसः
निर्ज्जितसकलारातिःपृच्छति।कःएकोमृत्योःसकाशाद्भयं
नऋच्छतिनप्राप्नोति।प्रत्युत्तरं विधुताराते ज्जः।हेविधुतारा
तेअजःशिवःपुंल्लिंगः।अजाविष्णुहरच्छागाइत्यमरः।नि
शायारात्रेस्तिमिरक्षयकारि अंधकारापहारिकिमितिपृष्टे।
प्रत्युत्तरंशब्दार्थेलिंगभेदेनाह।विधुताराते जः।विधोश्चंद्र
स्यताराणांनक्षत्राणांतेजोज्योतिःनपुंसकं।कीदृश्याःनिशायाः
।मेघात्ययेनमेघापगमेनकृतारुचिराआशादिग्यस्याःसा
तस्याः ।।४२ ।। ।। विहगेति।विहगपतिःपक्षि
राजोगरुडःकंस्म हिंशत्रुंहतवान्।प्रत्युत्तरं।अहिंसर्पंज
नसहितंपुरंनगरंकीदृग्भवति।प्रत्युत्तरं।अकरं।करोदंड
स्तेनहीनं हे धीमन्बुद्धिमन् विदितंकठिनंकिंप्रत्युत्तरं।करोदंड
हंनपुंसकं।पादःपतिरपिसमुद्रोपिकीदृग्भयकृ...तिव
द।प्रत्युत्तरं।अहिमकरमयः।अहयःसर्पाश्चमकरास्तैर्म
यःप्रचुरःपूर्णःप्राचुर्येप्राधान्यार्थेमयट्पुंल्लिंगार्थे ः।। ४३।।

॥४३॥ अहिमकरमयः शब्दार्थे लिंगभिन्नः॥ अनुकूलविधापिदैवतोविजयीस्यान्ननुकीदृशो नृपः॥ विरहिण्यपिजानकीवनेनिवसतीमुदमा दधौकृतः॥४४॥ कुशलवर्द्धितः। कुसुमपातदैत्यनाकतोवदकस्मैस्पृहयंतिभोगिनः। अधिगम्यरतंवरांगनाकृतुपत्नंकुरुतेसुशिक्षिताः ४५ सुरतरवे। शब्दार्थेविभक्तिभिन्नं॥ ७ ॥

इतिशब्दार्थेलिंगभिन्नम्॥४३॥ ॥शब्दार्थेविभक्तिभिन्नस्योदाहरण द्वयमाह। अनुकूलेति। अनुकूलविधापिदैवतंदैवोभाग्यंवायस्यसः नृपःकीदृशोविजयशीलः प्रत्युत्तरंकुशलवर्द्धितः। कुशलेनक्षेमेणवर्द्धितः वृद्धिंप्राप्तः कुशलंक्षेममस्त्रियामित्यमरः। प्रथमाविभक्तिः। विरहिण्यपिजानकीसीतावनेनिवसंतिकृतः कस्मान्मुदंप्रीतिमादधौ। प्रत्युत्तरंकुशलवर्द्धितः कुशश्चलवश्च कुशलवौतयोर्वृद्धिरभिवृद्धिस्तस्मात् पंचमीविभक्तिः ४४ कुसुममिति। नाकतः स्वर्गात्कुसुमंपुष्पंपतत्पतमाने सत्यप्राप्यभोगिनः सुखिनः कस्मैस्पृहयंतिवांछंति। भोगः सुखेस्त्र्यादिभृतावहेश्चफणकाययोरित्यमरः। प्रत्युत्तरं। सुरतरवेकल्पवृक्षायनुइतिवितर्के। सुशिक्षितावरांगनाचतुरास्त्रीरतंमैथुनमधिगम्यकृयत्नंकुरुते। प्रत्युत्तरं। सुरतरवे। सुरतस्यमैथुनस्यरवेध्वनौ ४५। शब्दार्थवचनभिन्नस्योदाहरणमाह कामिनि। कस्वन

कासुज्जहारहरिरंबुधिमध्यमग्नाकीदृक्श्रुतंभवतिनिर्मलमागमानां॥ आमंत्रयस्ववनमग्निशिखावलीढंतच्चापिकोदहतिकेमदयंतिभृंगान्॥४६॥ कुंदमकरंदविंदवः॥वसतिकुत्रसरोरुहसंततिर्दिनकृतोननुकेतिमिरच्छिदः॥ ७॥

म

पृच्छति। हरिर्विष्णुः अंबुधिमध्यमग्नांसमुद्रेनिलीनांकांउज्जहारऊर्ध्वंनीतवान्॥ प्रत्युत्तरंकुं। पृथ्वीआगमानांवेदानांकीदृक्श्रुतंश्रवणंनिर्मलंपापहंभवति। प्रत्युत्तरं। दमकरं। दमइंद्रियनिग्रहस्तंकरोतीतियत्तत्। वेदःश्रुतिस्त्रय्याम्नायःस्वाध्यायश्छंदआगमइतिहलायुधः। अग्निशिखावलीढं। अग्निज्वालयालेलिह्यमानवनंकाननं। आमंत्रयस्वेतिपृष्टे॥ प्रत्युत्तरंदविन्। दवोऽस्यास्तीतिदवीतत्संबोधनंहेदविन्। चपुनःतद्वनमपिकोदहति। प्रत्युत्तरंदवः। वनाग्निः। दवदावौवनारण्यवह्नीइत्यमरः। भृंगान्केमदयंतिमत्तंकुर्वंति। प्रत्युत्तरं। कुंदमकरंदविंदवः। कुंदस्यपुष्पविशेषस्ययोमकरंदःपुष्परसस्तस्यबिंदवःविप्रुषः॥ ४६॥

उदाहरणांतरमाहवसतीति। कश्चन्पृच्छतिसरोरुहाणांकमलानांसंततिःकुत्रकुत्रवसतीति। पृष्टे। प्रत्युत्तरं। केजलेकंशिरोजलमाख्यातं। ननुनिश्चितंदिनकृतोदिवाकरस्यतिमिरच्छिदःअंधकारध्वंसकाःकेभवंति। तिपृष्टे प्रत्युतरं। किरणोत्कराःकिरणव्यूहाःपवनभक्षा

पवनभस्ससपत्नरणोत्सुकंपुरुषमाह्वयकोजग
तिप्रियः ॥४७॥ केकिरणोत्कराः ॥ शब्दार्थेवच
नभिन्नं॥ कीदृग्गदृंयाम्यगदृंगतस्यकास्त्रा।
णसंभस्तरणेजनानां भूषानतेकंठकथंनुपृष्टेमु
क्ताकलापेरितिचोत्तरंकिम्॥ ४८॥ ७॥

सर्पोस्तेषांसपत्नोरिपुर्मयूरस्तस्यरणेयुद्धे उत्सुकंउत्कंठि।
तंपुरुषं आह्वयेतिपृष्टे।प्रत्यु० हेकेकिरणोत्क।केकीमयूर।
स्तस्यरणेउत्कंठित।शिखावलःशिखीकेकीत्यमरः।जगति
लोकेप्रियःक इतिपृष्टे।प्रत्युत्तरं।राः अर्थः। अर्थरैविभ
वा अपीत्यमरः।पूर्वंकिरणोत्कराइतिप्रथमाबहुवचनमु
क्तं।पश्चात्रैशस्यराइतिरूपंप्रथमैकवचनमुक्तं।शब्दा।
र्थस्तुसर्वत्रपृथगेव।तस्मादेतत्प्रश्नशब्दार्थवचनभिन्नसंज्ञ
कम्॥४७॥ शब्दार्थविभक्तिभिन्नस्योदाहरणमाह
।दृगिति।यमस्येदंयाम्यं।याम्यंचतद्गृहंचयाम्यगदृं।या।
म्यगदृंगतस्यपुंसःगदृंकीदृगितिपृष्टे।हाराविं।हायुक्तः
।विषादेनशोकेनपीडयाचयुक्तोरावःशब्दोयत्रतत्।
हाविषादशुगर्त्तिष्वित्यमरः। अंभसांजलानांतरणेपरपा
रगमनेकात्राणंशरणं।प्रत्युत्तरंनावः। नौकाः।नुइतिप्र।
श्ने हे।चपुनरर्थे।कंठेहेगलनेतवभूषा अलंक्रियाकथंन।
मुक्ताकलापेमुक्ताहारैरिति असुनाप्रकारेणपृष्टेकंठः।प्र
त्युत्तरंवदन्ति।हाराविनावः।हेहाराःवोविनायुष्मान्विनाकंठ
स्यालंक्रियानास्ति।नावइतिस्त्रीलिंगःप्रथमाबहुवचनंच।

हाराविनाच ॥ कवयोवद कुत्रकीदृशाः कठिनं । किंविदितंसमेततः ॥ अधुनातववैरियोषितांहृदि तापःप्रबलोविहायकाः ॥ ४९ ॥ गिरिसारमुषाः । शब्दार्थविभक्तिलिंगभिन्नम् ॥

वइतियुष्मच्छब्दस्यद्वितीयाबहुवचनादेशश्च । शब्दार्थविभक्तिभेदोलिंगभेदश्चोक्तः ॥ ४८ ॥ ७ ॥

शब्दार्थविभक्तिलिंगपश्नस्योदाहरणांतरमाह । कवयइति । कवयः पंडिताः कुत्रकस्मिन्विषयेकीदृशाभवंतिवदेतिपृष्टे । प्रत्युत्तरं । गिरिसारमुषाः गिरिवाणांसारंरहस्यंमुष्णंति । अपहरंतीतिगिरिसारमुषाः । मुषस्तेये । इगुपधात्कः । गिरसारसुखाः । इतिपाठेतुगिरिवाणांसारंन्याय्यंन्यायादृहेमुखंयेषांतेगिरिसारसुखाः सारोवलेस्थिरांशेचन्याय्येक्लीववरेत्रिषुइत्यमरः । समेततः परितः विदितंप्रसिद्धंकठिनंकिंप्रत्युत्तरं । गिरिसारंलोहंस्त्रीशस्त्रकंतीक्ष्णंपिंडंकालायसायसी । अश्मसारइत्यमरः पुनःपृच्छति । अधुनातववैरियोषितांशत्रुस्त्रीणांहृदयेकाः विहायतापः प्रबलइतिपृष्टे । प्रत्युत्तरम् उषाः रात्रीः तदंतंवा । उषारात्रेरवसानइत्यमरः । उषा । रात्रौतदंशेस्यादन्यत्राव्ययमप्युषेतिविश्वः । प्रायोरात्रेश्चरमयामेपर्वक्रभयाभावस्तस्मात्तस्मिन्कालेसुखेनक्षपितानिस्सूचितंसारमुषाइतिपुल्लिंगेप्रथमाविभक्तिः । उषाइति स्त्रीलिंगेद्वितीयाविभक्तिश्च ॥ ४९ ॥ शब्दार्थविभक्तिलिंगभिन्नम् ॥ ४९ ॥ ७ ॥ ७ ॥

शब्दार्थवचनलिंगभिन्नस्योदाहरणद्वयंश्लोकद्वयेनाह ।

मेघात्यये भवति किं सुभगावगाहं का वा विडंब ।
यति चारणमहत्त्ववेश्याः॥ दुर्वारवीर्यविभवस्य भवे
द्धि शोकः काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः ५०
सरोजराज्जयः॥ पृच्छति शिरोरुहो मधुमथनं मधु
मथनस्तं शिरोरुहं च॥ कः खलु चपलतया भुवि
विदितः कानन्तयानतया गवि विदिता॥ ५१ ॥
केशव नौका शब्दार्थ वचन लिंग भिन्नं॥ ॥

मेघात्यय इति। मेघात्यये शरत्काले सुभगावगाहं शोभनं
मज्जनयोग्यं किं भवति। प्रत्युत्तरं। सरः सरसी। कासारः स
रसी सर इत्यमरः। चारणाश्च महत्त्राश्च वेश्याश्च चारणम।
हत्त्रवेश्यास्ताः वेस्यवधारणे। का विडंबयति। प्रत्युत्तरं। जरा
वार्द्धकं दुर्वारवीर्यविभवस्य भूपस्य रशोकः भवेत्। प्रत्युत्तरं
। जयः विजयः। तरणिप्रभाभिः सूर्यकिरणैः स्मेरवक्त्रेण सं।
स्मितमुखेन सुभगाः शोभनाः काः प्रत्युत्तरं। सरोजयः। कम।
लानां लेखाः॥ ५०॥ शिरोरुहः केशः मधुमथनं केशं।
वं पृच्छति। च पुनः मधुमथनः केशवस्तं शिरोरुहं पृच्छति।
किं पृच्छती त्याह भुवि भूतले। चपलस्य भावश्चपलता तया
चपलतया कः विदितः। एवं शिरोरुहेण पृष्टे मधुमथनो व
दति हे केश। वनौकाः वने ओकः स्थानं यस्य सः वानर इत्यर्थः
ननु इति प्रश्ने। गवि जले मा नृवा युजले शुगौरि तिनानार्थः। यान
तया। यानस्य भावो यानता यानतया का गदिता उक्ता। मधुमथने
न पृष्टः शिरोरुहो वदति हे केशव नौका नावः ५१ शब्दार्थ वचन लिं

नभवतिमलयस्यकीदृशीभूः कइहकुचनविभ। र्ति कंगताश्रीः भवदरिनिवहेषुकास्तिनित्यंव। लमथनेनविपद्यधायिकेषां ॥ ५२ ॥ विपन्न। गानां समयमिहवदंतिकंनिशीथंशमयतिकान्न्व दवारिवाहवृंदम् ॥ वितरतिजगतांमनस्तुकोदृक्षु

शब्दार्थवचनविभक्तिभिन्नस्याद्यमुदाहरणं। यथानेनि। कश्चनपृच्छति कीदृशाभूः भूमिः। मलयस्यगिरेर्नभवति। प्रत्युत्तरं। विपन्नगाः सर्प्पायस्याः सासर्पैरहितामलयभूमि र्नभवत्येव। इहलोकेकः कुचस्तनंनविभर्त्तिनधरति। प्रत्यु। त्तरं। नापुमान्। पुनःपृच्छति। श्रीर्लक्ष्मीः कंगताकमाश्रिता प्रत्युत्तरं। अंविष्णुं। अकारोवासुदेवःस्यादित्येकाक्षराभि धानः भवदरिनिवहेषुभवतांशत्रुवर्गेषुनित्यंकाऽस्ति। प्रत्यु त्तरंविपत्। आपत्। बलमसुरमथ्नातीतिबलमथनः शक्र स्तेनकेषांविपद्व्यधायि। कृतामत्युत्तरं। नगानांशैलानां। नरुशैलौनगाविल्यमरः। बलारातिः शचीपतिः ॥ ५२ ॥

अस्यैवोदाहरणांतरमाह समयमिति इहलोकेकंस मयंकंकालंनिशीथंनक्तंवदंतिविद्वांसइतिशेषः। प्रत्युत्तरं। अरविंनविद्यतेरविर्यस्मिन्सअरविस्तं। नक्तंनिशीथोरज। नीरात्रिर्दोषाविभावरीतिनाराभिधानः। वारिवाहवृंदंमेघ। समूहः कान्शमयतिनिर्वापयति। प्रत्युत्तरंदवान्वनाग्नी। न्। सदानिरंतरं। अयंदृष्टिगोचरस्तज्जगः कीदृशः जगतांम नः सुलोकानांचित्तेषु। मात्रांपरिमाणविशेषं अतिक्रम्यव

दमतिमात्रमपसदातडागः ॥ ५३ ॥ अर।
विंदवान्॥ शब्दार्थैवचनवि॥ कीदृक्संसमि
तिवलंनिहंतिशत्रुंविस्पोः कामनसिमुदंसदातनो
ति।तुछसच्छरधिसुखंनिगद्यतेकिंपंचत्वेः समममप
मानएवकेषु ॥ ५४ ॥ अभिमानिषु॥ घनसम
येशिखिषुस्यान्नृत्यंकीदृक्षुकिंघनात्यनति॥ ॥

ते तद्दत्यतिमात्रंमुदंहर्षःवितरतिप्रयछति।प्रत्युत्तरं।अर।
विंदवान।कमलोशोभितः।दवानितिद्वितीयाविभक्तिसद्दहु
वचनंच। अरविंदवानितिप्रथमाविभक्तेरेकवचनंएतेनशब्दा।
र्थवचनेविभक्तिभिन्नसंज्ञंप्रश्नमेतत्॥ ५३॥ ॥
शब्दार्थेलिंगवचनभिंनस्योदाहरणं। यथाकीदृक्समितिः॥ स
मितिसंग्रामेकीदृक्संवलंसैन्यंशत्रुंनिहंतिघातयति॥वरूथि
नीवलंसैन्यमित्यमरः प्रत्युत्तरं।अभिनविद्यतेभीर्भयंयत्रततत्
भयरहितमित्यर्थः सदाविस्रोर्मनसिहरेश्चित्तेकामुदंतनोति
प्रीतिंविस्तारयति। प्रत्युत्तरं।मालक्ष्मीःतुछंसततरिक्तंसच्छर
धिसुखंतूणीकोशंकिंनिगद्यतेउच्यते। प्रत्युत्तरंअभिषुन।
विद्यंतेइषवोवाणायस्मिंस्तत्।तूणोपासंगतूणीरनिषंगाइ
षुधिर्द्वयोस्तूणयामित्यमरः। अपमानएव अवज्ञेवपंचत्वेः
समंमरणतुल्यंकेषु।प्रत्युत्तरं।अभिमानिषु।अभिमानयुक्ते
षुपंचत्वंमरणंमृत्युः कालधर्मेदृतिनाशभिधानः ॥ ५४ ॥
उदाहरणांतरमाहनेति। घनसमयेप्रावृट्कालेकीदृक्षुशि
खिषुमयूरेषुनृत्यंनटनंस्यात्।प्रत्युत्तरं।समुत्सुसहर्षेसुघना

प्रावृषिकस्यनगमनंमानसगमनायकीदृशाहंसा ॥ ५५ ॥ सम्रुत्सुकमनसः ॥ ५५ ॥ ॥

अर्थेमात्रैकभेदेनभिन्नंबध्नंतिकेचन ॥ सुकुमारधियस्तच्चविदग्धैनोंदृतंयथा ॥ ५६ ॥ आनंदयतिकोत्यर्थंसज्जनानेवभूतले ॥ प्रबोधयतिपद्मानितमांसिचनिहंतिकः ॥ ५७ ॥ मित्रोदयः

अटवीकीदृशीप्रायोदुर्गमाभवतिप्रिये ॥ प्रियस्यकी

मेघात्किंपतति। प्रत्युत्तरं। कंजलंप्रावृषिवर्षाकालेगमनंगतिःकस्यनस्यात्। प्रत्युत्तरं। अनसः। शकटस्य। क्लीबेऽनः शकटोऽस्त्रीस्यादित्यमरः। मानसंदेवसरस्तंप्रतिगमनंमानसगमनंतस्मैमानसगमनायहंसाः राजहंसाःकीदृशाः भवंतीतिपृष्टे। प्रत्युत्तरं। समुत्सुकमनसः। उत्कंठितचेतसः अनसइतिनपुंसकलिंगषष्ठ्येकवचनंचसमुत्सुकमनसंप्रतिपुंल्लिंगोबहुवचनंच। ५५ ॥ शब्दार्थेलिंगवचनभिन्नं। इतिप्रभिन्नकजातिःप्रकारांतरमाह अर्थेति। केचनसुकुमारधियः अल्पबुद्धयः अर्थमात्रएवएकोभेदोयस्मिन्सः तेनभिन्नंवध्नंतितत्प्रश्नंविदग्धैरादृतं। चकारान्नत्युथादर्श ५६ आनंदयतीतिभूतलेपृथिव्यांसज्जनानेव अत्यर्थंकःआनंदयति। प्रत्युत्तरंमित्रोदयः। मित्राणामुदयः। पद्मानिकः प्रबोधयति। चपुनः। तमांसि अंधकारराशिकःनिहंति। मित्रोदयःमित्रस्यसूर्यस्योदयः। द्युमणिस्तरणिर्मित्रइत्यमरः

दृशी कांतातनोतिसुरतोत्सवं ॥ ५८॥ मदनवति।
भिन्नावव श्यौ कर्तव्यौ शब्दार्थौ प्रश्नकोविदैः। लिं
गादिषु यथाशक्ति भेदमाहुर्विपश्चितः ॥ ५९ ॥
इतिधर्मदासकृते विद॰ प्रम॰ प॰॥ विशेषणं विशे
ष्यंच पत्र प्रश्ने विधीयते। भेद्यभेदकमाहुस्तं प्रश्नम
श्नविदो यथा १ ॥ कीदृक्किं स्यान्नमस्यानां हितं

अटवीति। कश्चन पृच्छति कीदृशी अटवी वनस्थली दुर्गमा
भवति। प्रत्युत्तरं मदनवती मदनो धत्तूरस्तेन युक्ता। मातुलो म
दनश्चैव धत्तूरः कनकाह्वय इति ताएभिधानः। कीदृशी कां
ता प्रियस्य सुरतोत्सवं तनोति। प्रत्युत्तरं मदनवती कामिनी
त्यर्थः॥ ५८॥ भिन्नाविति। तस्मात्प्रश्नकुशलैरवश्यं शब्
दार्थौ भिन्नौ। कर्तव्यौ। लिंगादिषु लिंगविभक्तिवचनेषु य
थाशक्ति यथामति विपश्चितः पंडिता भेदमाहुर्वदंति॥ ५९
ताराचंद्रकृतायामस्यां विद्वन्मनोहराख्यां विद्वन्मनोहराख्या
यां टीकायां सरहस्यः पूर्णः प्रथमः परिच्छेदः। पूर्वपरिच्छेदे।
व्यस्तादिप्रभिन्नकांतानां प्रश्नानामुदाहरणान्युक्तानि। इ
दानीं भेद्यभेदकजातेर्लक्षणमुच्यते। विशेषणमिति। य।
स्मिन्प्रश्ने एकवाक्ये विशेषणं विशेष्यं च विधीयते क्रियते कवि
ना तं प्रश्नं प्रश्नविदः भेद्यभेदकसंज्ञकं आहुः प्रोचुः तत्प्रश्नं य
था प्रदर्शयतीत्यर्थः॥ १ ॥ भेद्यभेदकजातेरुदाहरणं द्व
ध्यामाह कीदृगिति। स्वेच्छाविहारिणां नमस्यानां कीदृक्किं हि
तं न स्यादिति। पृष्टे। प्रत्युत्तरं। विमत्सरः विमत्। विः पक्षी न द्यु

स्वेच्छाविहारिणाम् । गुरोः परेषामत्यर्थमोदनेकी दृशः पुमान् ॥ २ ॥ विमत्सरः ॥ अगस्त्येन पयो राशेः कियत्कंपीतमुज्झितं ॥ त्वया वैरिकुलंवीरस मरेकीदृशंकृतं ॥ ३ ॥ सकलंकं ॥ भेद्यभेदक । जातिः ॥ दीर्घवृत्तेन यत्पृष्टमुत्तरंकियदक्षरं ॥ तदोजस्वीति विख्यातमूर्जितंचेतिकेचन ४ ॥ कामिन्याःस्तनभारमंथरगतेर्लीलाचलच्चक्षुषः

कंसरस्तडागं विमदितिविशेषणं । सरइतिविशेष्यं । परे षांगुरोः । अन्येषांसच्चरित्रैः कीदृशःपुमान्अत्यर्थमोद तेहर्षितोभवति । प्रत्युत्तरं । विमत्सरः । अन्यशुभद्वेषरहि तः । मत्सरोन्यशुभद्वेषइत्यमरः ॥ २ ॥ अगस्त्येनमु निना पयोराशेः समुद्रात्कियत्कंपीतंकियत्कंउज्झितमि तिपृष्टे । प्रत्युत्तरं । सकलं । सकलंसमस्तंकंजलंसर्वंजलं । पीतं । ससर्वजलमुज्झितमित्यर्थः । अत्रसकलमितिविशे षणं । कमितिविशेष्यं । हे वीर त्वयासमरे युद्धे वैरिकुलंश त्रुसंतानंकीदृशंकृतं । प्रत्युत्तरं । सकलंकं । कलंकेनसहि तमित्यर्थः ॥ ३ ॥ भेद्यभेदकजातिः ॥ ओजस्विजा तिलक्षणमाहदीर्घेति । यत्दीर्घवृत्तेनपृष्टंसत्उत्तरंकिय दक्षरेणाल्पाक्षरेणभवतितदोजस्वीतिविख्यातंकेचनत मूर्जितसंज्ञमाहुः ॥ ४ ॥ एतदुदाहरणंयथा । कामि न्याइति । कामिन्याः कीदृक्पुमान्वल्लभः । प्रत्युत्तरंसमर तः । समंतुल्यंरतंमैथुनंयस्यसः । कीदृश्याः कामिन्याः ।

कंदर्पैकविलासनित्यवसतेः कीदृक्कुसुमान्चन्द्रमः
हेलाकृष्टकृपाणपातितगजानीकान्कुतस्तेरयः।
स्त्रासायासविसृष्टकंठकुहराणिर्यातिजीवार्थि
नः॥ ५ ॥ समरतः दैत्यारातिरसौवराहवपुः
षाकामुज्जहारांबुधेः कारूपंविनिहंतिकोमधुव
धूवैधव्यदीक्षागुरुः। स्वछंदंनवसल्लकीकवल
नैः पंपासरोमज्जनैः केविंध्यादिवनेवसंत्यभिम
तक्रीडाभिरामस्थिताः॥ ६॥ ७ ॥

स्तनयोर्भारेणमंथरामंदागतिर्यस्याः पुनः लीलयाचलं।
नीचंचलेचक्षुषीयस्याः पुनः कंदर्पैकविलासस्यनित्यावस
तिः स्थानंयातस्याः। वसतीरात्रिवेश्मनोरित्यमरः। नेऽरयः
तवशत्रवः जीवनकामाः कुतोनिर्यांति। अपसरंति। प्रत्यु
त्तरं। समरतः समरः संग्रामस्तस्मात्। कीदृशात् हेलयाआ
कृष्टेनकृपाणेनपातितानिगजानामनीकानिसैन्यानियस्मि
न्सतथातस्मात्। कीदृशाअरयः। त्रासायासेनविसृष्टाणिकं
ठकुहराणियेषांते। कुहरंसुषिरंविवरंबिलमित्यमरः ५ ॥
उदाहरणांतरमाह दैत्येति असौजगद्व्यापकोदैत्यारातिर्वि
ष्णुः वराहवपुषावाराहावतारेण अंबुधेः सकाशात्कांउज्जहा
रउद्धृतवानितिप्रष्टे। प्रत्युत्तरं। कुं पृथ्वी। रूपंचक्षुर्ग्राह्यंकावि
निहंति। प्रत्युतरं। जरावार्द्धकं। मधुनाम्नोदैत्यस्यवधूर्जाया
तस्याःवैधव्यदीक्षायांगुरुराचार्यःकः। प्रत्युतरंअः विष्णुः स्व
छंदंनिरवग्रहंयथास्यात्तथानवसल्लकीकवलनैः नवाचासौ

कुंजराः ओजस्विजातिः ॥ उपमादिरलंकारो बहुधापरिकीर्तितः ॥ यत्तेनकथ्यतेसार्धंसालंकारंतदुच्यते ॥ ७ ॥ कल्याणवाकृत्वमिवकिंपदमत्रकांतंसद्रूपतेस्त्वमिवकः परितोषकारी ॥

सल्लकीवनवसल्लकीगजभक्ष्या।तस्याः कवलान्याखादनानितैः।पंपासरोमज्जनैः कृत्वाविंध्याद्रेः वनेकेवसंतिप्रत्यु कुंजराःगजाः कीदृशाःअभिमतक्रीडाभिरामेस्थिताः अभिमताचासौक्रीडाचअभिमतक्रीडा।अभिमतक्रीडया अभिरामं अभिमतक्रीडाभिरामंतत्रतिष्ठंतियेते ॥ ६ ॥ सालंकारजानेर्लक्षणमाहउपमेति।उपमीयतेअनेनेत्युपमा।उपमाआदिर्यस्यसउपमादिरलंक्रियतेअनेनेत्यलं।कारः।बहुप्रकारइतिबहुधापरिकीर्तितउक्तः।यत्प्रश्नेतेन उपमाद्यलंकारेणसार्धंकथ्यतेसालंकारसंज्ञकंतदुच्यते ॥ ७ ॥ ॥ अस्योदाहरणंयथाकल्याणेति।कश्चनपृच्छति अत्रलोकेयथात्वंकल्याणवाग्भवसितथात्वमिवकिंपदंकांतं।शंशिवं।कल्याणमित्यर्थः।सद्रूपतेस्त्वमिव परितोषकारीकः।प्रत्युत्तरं।करोदंडःभागधेयः करोबलिरित्यमरः सर्वदाअतिमात्रंभूत्याश्रितः। ऐश्वर्येवान्वृषगतिःसुकृतीपालितसर्वभूतः पालितप्रजालोकस्त्वमिवकः। प्रत्युत्तरं।शंकरः शिवः।कीदृशःअत्यंतंविभूतिभूषितः वृषभगामीपालिताः सर्वेभूतप्रेतादयोयेनसः विभूतिर्भूतिरैश्वर्ये।सुकृतेवृषभेवृषइतिनानार्थेः॥ ७ ॥

कः सर्वदा हृष्यगतिस्त्वमिवातिमात्रभूत्याश्रितः।
कथय पालितसर्वभूतः॥ ८॥ सूर्यस्यकांति।
मिरकुंजरवृंदसिंहीसत्यस्यकासुकृतवारिधिचंद्रले
खा॥ पार्थश्चकीदृगरिदावहुताशनोभूत्कामालती
कुसुमदाम हरस्यमूर्ध्नि॥ ९॥ भागीरथीरूपसा
लंकारजातिः॥ लघुवृत्तेनयत्पृष्टं प्रभूताक्षरमुत्तरं।
सकौतुकमितीच्छंतितद्विदस्तदिदंयथा॥ १० ॥

इवेतिसादृश्येर्थे॥ ८॥ उदाहरणांतरमाह। सूर्यस्ये
ति।सूर्यस्यविवस्वतस्तिमिराण्येवकुंजरास्तिमिरकुंजरास्ते।
षांवृंदंसंघस्तिमिरकुंजरवृंदंतस्यसिंहीअपहंत्री।तिमिरकुं
जरवृंदसिंहीका।प्रत्युत्तरं।भादीप्तिः भाश्छविर्द्युतिरीप्ता।
पइत्यमरः।सत्यस्यकृतस्य।सुकृतस्यपुण्यस्यवारिधिःसमु
द्रःसुकृतवारिधिस्तस्यचंद्रलेखाका।प्रत्युत्तरं।गीःवाणीवाे।
ग्वाणीत्यमरः।चपुनःपृथायाःकुंत्याःसुतःपार्थःअर्जुनः।
अरिदावहुताशनः।अरीणांशत्रूणांदावहुताशनोदावानलः
कीदृगभूदितिपृष्टे।प्रत्युत्तरं।रथीरथयुक्तइत्यर्थः।शतांगः
स्यंदनोरथइत्यमरः।हरस्यशिवस्यमूर्ध्निमस्तकेमालतीकु
सुमदाम।जातीकुसुममालाका।प्रत्युत्तरं।भागीरथीत्रिपथ
गा।सुमनामालतीजातिरित्यमरः॥ ९॥ सालंकारजातिः
॥सकौतुकजातेर्लक्षणमाह लघ्विति यत्रलघुवृत्तेनपृष्टंस
त्प्रभूताक्षरेणप्रचुराक्षरेणोत्तरंतत्सकौतुकसंज्ञमिति। त
दिदंसकौतुकंयथाप्रदर्शयति ॥ १० ॥ ७ ॥

के स्थिराः के प्रियाः स्त्रीणां कोऽप्रियो नक्तमाह्वय नृत्य भूः कीदृशी रम्या नदी कीदृग्घनागमे ११ ॥ अगाध वारिपूरजनिततरंगा ॥ का कृता विष्णुना कीदृग्यो वितांकः प्रशस्यते ॥ असेव्यः कीदृशः स्वामी को निहंति निशातमः ॥ १२ ॥ कुमुदवनबांधवोदयः ॥ सकौतुकजा तिः ॥

कइति । कश्चन पृच्छति । स्थिराः के । प्रत्युत्तरं । अगाः शैलाः । स्त्रीणां प्रियाः के । प्रत्युत्तरं धवाः पतयः । अप्रियः कः । प्रत्युत्तरं । रिपुः शत्रुः नक्तं निशीथमाह्वय प्रत्युत्तरं । रजनि । नक्तं चरजनी त्यमरः । रम्या नृत्यभूः मनोज्ञा नृत्यभूमिः कीदृशी । प्रत्युत्तरं । ततरंगा । ततेन विणादि चतुर्विधवाद्येन युक्ते रंगो नृत्यस्थानं यस्याः सा । ततं वीणादिकं वाद्यमित्यमरः । रंगः स्यान्नर्त्तनस्थानमिति हलायुधः । घनागमे वर्षाकाले नदी कीदृक् । प्रत्युत्तरं । अगाधवारिपूरजनिततरंगा ॥ अगाधश्चासौ वारिपूरश्च अगाधवारिपूरस्तेन जनिता उत्पादिताः तरंगा ऊर्मयो यस्याः सा । अगाधमतलस्पर्शे । भंगस्तरंग ऊर्म्मिश्चेत्यमरः ॥ ११ ॥

उदाहरणांतरमाह केति । विष्णुना जगद्व्यापकेन का कृता । प्रत्युत्तरं अवनवान् । धवः । अवनं रक्षणं तद्युक्तः धवः पतिः असेव्यः सेवाकर्त्तुमनर्हः स्वामी प्रभुः कीदृशः । प्रत्युत्तरं । अदयः दयारहितः । निशातमः रात्रेस्तिमिरं को निहंति । प्रत्युत्तरं । कुमुदवनबांधवोदयः । कुमुदानां वनं कुमुदवनं कुमुदवनस्य बांधवश्चंद्रस्तस्योदयः । इंदुः कुमुदबांधव इत्यमरः १२ ॥ ७ ॥

प्रश्नोत्तरसमजातेर्लक्षणमाह प्रश्नेति । पत्रप्रश्ने । प्रश्नवर्णाश्च

प्रश्नवर्णोस्तुतेस्तुल्यपत्रस्यादुत्तरंवरम्।प्रश्नोत्तर
समंतद्धास्तदाहुःश्रूयतांयथा॥१३॥ कंदर्प्पमद
जनकंप्राहुःकाचघटीगदिताछ्छतमेह॥इत्यादिप्रश्ने
प्रुक्तंयद्भूततदुत्तरमाशुविचिंत्य॥१४॥ पथिकस्ति
ष्ठतिकष्टविरहीनाविकआस्तेतत्कृतरक्षः॥इत्यादि॥
प्रश्नेप्रुक्तंयद्भूह्नितदुत्तरमुत्तमपुरुष॥१५॥ इतिप्र
श्नोत्तरसमजातिः॥ यस्मिन्नुत्तरमुत्त्वायेप्रश्नस्तस्यैव
पृछ्यते॥

वर्णस्यतुल्यमुत्तरंवरंनिःसंदिग्धंस्यात्तत्प्रश्नोत्तरसमं तमाहुः
तज्ज्ञावेतीतिनद्धाःश्रूयतांभवद्भिरितिशेषः।यथादर्शयति १३
अस्योदाहरणंयथाकमिति।मदजनकंमदोत्पादकंकंदर्प्पंकंग
र्वंप्राहुरितिपृष्टे।इदमेवोत्तरं।कंदर्पमदनं।दर्प्पोमदोवलेपोमा
नोगर्वोभवेदहंकारइतिहलायुधःचःपुनरर्थे।इहलोकेकाचघ
टीकलशीअछ्छतमाअतिशयेनस्वछ्छानिर्मलेत्यर्थः।प्रत्युत्तरं
तदेव।काचघटीकाचस्यमरणोर्घटीमध्यदेशेसीसीतिख्यातिःइ
त्यादिप्रश्नेयत्प्रुक्तंउचितमुत्तरंतद्विचिंत्यविचार्य्यआशुशीघ्रं
ब्रूत॥१४॥ पथीति।पथिमार्गेकोविरहीस्यादितिप्रश्नःकष्टं
तिष्ठतिदुःखमनुभवतिप्रश्नाक्षरमेवोत्तरं।पथिकःअध्वगःनावि
नौकायांकआस्तेकस्तिष्ठति।प्रत्युत्तरं।नाविकःकर्णधारः।कीदृ
शःतत्कृतरक्षःतस्याःनौकायाःकृतारक्षायेनसःकर्णधारस्तुना
विकइत्यमरः।उत्तमपुरुषेतिसंबुद्धिः।अन्यत्स्पष्टं॥ १५॥प्रश्नो
त्तरसमजातिः॥ दृष्टप्रश्नजातेर्लक्षणमाह यस्मिन्निति।यस्मि
न्प्रश्नेउत्तरमुत्त्वायेतस्यैवोत्तरस्यप्रश्नःपृछ्यतेनत्दृष्टप्रश्नसंज्ञंइछ्छं।

दृष्टप्रश्नं तदिच्छंति प्रश्नोत्तरविदो यथा॥ १६॥ लक्ष्मणो त्युत्तरं यत्र प्रश्नः स्यात्तत्र कीदृशः ग्रीष्मे द्विरदद्वंद्वा यवनाली कीदृशी हिता॥ १७॥ कासारसहिता॥ चादयइति पत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः॥ कथयत्वरितं के स्युर्नौकाया वाहनोपायाः॥ १८॥ के निपाताः दृष्टप्रश्नजातिः॥ कथयामुकमित्यादि भंक्त्वा यत्रोत्तरं भवेत्

प्रश्नोत्तरविज्ञाः यथा दर्शयति॥ १६॥ लक्ष्मणोति। यत्र प्रश्ने लक्ष्मणोत्युत्तरं भवति। तत्र प्रश्नः कीदृशः स्यादिति पृष्टे। प्रत्युत्तरं। कासारसहिता सारस्य पक्षिविशेषस्य हिता प्रिया का भवतीत्येवं पृष्टे लक्ष्मणोत्युत्तरं सिध्यति॥ सारसस्य तु लक्ष्मणेत्यमरः। ग्रीष्मे निदाघकाले द्विरदद्वंद्वाय गजयूथाय यवनाली वनश्रेणी कीदृशी हिता सुखदा। प्रत्युत्तरं कासारसहिता। कासारेण सरसा सहिता कासारः सरसी सरः। वीथ्याल्लिरावलिः पंक्तिः श्रेणीत्यमरः॥ १७॥ दृष्टप्रश्नस्योदाहरणांतरमाह। चादयइति। यत्र प्रश्ने चादयइत्युत्तरं स्यात्तत्र प्रश्नः कीदृशो भवति के निपाताः। निपातसंज्ञकाः के भवंति एवं पृष्टे चादयो निपाता इत्युत्तरं सिद्धं पुनः पृच्छति नौकायास्तरणेर्वाहनोपायाः पारावारगमनसाधनानि के स्युरिति त्वरितं शीघ्रं कथयेति पृष्टे। प्रत्युत्तरं। केनिपाताः अरित्राणि। अरित्रं केनिपातक इत्यमरः मध्यदेशे डांडेति ख्यातिः॥ १८॥ इति दृष्टप्रश्नजातिः॥ ७ ॥ ७ ॥

भग्नोत्तरजातेर्लक्षणमाह कथयेति। यत्र प्रश्ने अमुकं कथयेत्यादिपदं भंक्त्वोत्तरं भवेत् तत् भग्नोत्तरसंज्ञमिच्छंति कीदृशं तत्।

भग्नोत्तरंनदिष्टंतिकाकुमात्रेणगोपितं॥ १९ ॥
भवतइवातिस्वच्छंकस्याभ्यंतरमगाधमतिशिशिरं॥
काव्यामृतरसमग्नस्त्वमिवसदाकः कथयसरसः २०
वीरेसरुषिरिपूणांनिपतंकाहृदयशालिनीभवति॥
नभसिप्रस्थितजलदेकाराजतिदेववदतारा ॥ २१॥
भग्नोत्तरजातिः॥ यत्पृष्टंप्रश्नवाक्येस्यादादिम-
ध्यांतसंस्थितं॥

काकुमात्रेणगोपितंशोकभयादिजनितध्वनिविकारेण
गोपितमप्रकटं। काकुःस्त्रियांविकारोयःशोकभीत्यादि-
भिर्ध्वनेरित्यमरः॥ १९ ॥ भग्नोत्तरजातेरुदाहरणद्वयं-
श्लोकद्वयेनाह भवतइति। भवतइवयथाभवतस्तथाकस्याऽ-
भ्यंतरमंतःकरणंस्वच्छंनिर्मलंअगाधंगंभीरंअतिशिशिरं-
अतिशीतलमितिपृष्टे। प्रत्युत्तरं। सरसःकासारस्य। शिशिरो
जडः। तुषारःशीतलःशीतइत्यमरः। सदात्वमिवकाव्यामृत
रसेषुमग्नोलीनःकःकथय। प्रत्युत्तरं सरसःरसैःशृंगारादिभिरष्ट
भिःसहितः॥ २० ॥ सरुषिवीरेसक्रोधेसुभटेसतिनिय
तंनिश्चितंरिपूणांहृदयशालिनीकाभवति। तारा इत्यत्रतका
रंभंक्त्वाप्रत्युत्तरंददाति। आरा। चर्मभेदिका। स्यादाचर्मभेदि
केत्यमरः। प्रस्थितजलदेनभसिमेघरहितेआकाशेकाराज
तिशोभतेहेदेववदप्रत्युत्तरं। तारानक्षत्रं। नक्षत्रमृक्षंभंतारे
त्यमरः॥ २१ भग्नोत्तरजातिःयदितिप्रश्नवाक्येप्रथमश्लोके
आदिमध्यांतसंस्थितंयत्पृष्टंस्यात्तनउत्तरंत्रिधा। आदिमध्यां
तसंज्ञितमिति। आद्युत्तरसंज्ञं। मध्योत्तरसंज्ञं। अंतोत्तरसंज्ञं

उत्तरंतत्त्रिधाप्रोक्तमादिमध्यांतसंज्ञितं॥ २२ ॥
भ्रमरहितः कीदृक्षो भवतितरांविकसितः पद्मः॥ १
ज्योतिषिकः कीदृक्षः प्रायोभुविपूज्यते लोके॥ २३
प्रभवः कोगंगायानगपतिरतिसुभगशृंगधरः॥ के १
सेव्यंतेसेवकसार्थैरत्यर्थमर्थरतैः॥२४॥ आद्युत्त
रजातिः॥

चेत्यर्थः।तिङ्सुबंतचयोवाक्यंक्रियावाकारकान्वितेत्यम १ः
॥२२॥ तत्राद्युत्तरजातेरुदाहरणमाह भ्रमेति।नरामति
शयेनविकसितः प्रफुल्लपद्मः भ्रमराणांहितः प्रियः कीदृक्षो
भवति।प्रत्युत्तरंश्लोकादावाह भ्रमरहितः भ्रमः पंकस्तेनहीनः
वापुंसिपद्मंनलिनमित्यमरः।भुविभूमौ प्रायोबाहुल्येनज्योतिषि
ज्योतिःशास्त्रेलोकैर्मनुष्यैःकः पुरुषः कीदृक्षः कथंपूज्यते।
प्रत्युत्तरंतदेव।भ्रमरहितः अयंभ्रांत्यारहितइति। भ्रांतिर्मि
थ्यामतिर्भ्रमइत्यमरः॥ २३॥ आद्युत्तरजातेरुदाहरणां
तरमाहप्रभवइति।कः नगपतिः शैलराजः गंगायाः भागीर
थ्याः प्रभवः आद्योपलब्धिस्थानंप्रत्युत्तरंप्रभवइत्यर्थः प्रभ
वः नगपतिरितिविशेषणादेवप्रभवोहिमालयः।यथावाल्मी
किः संस्कृतप्रभवः नथाहिमवान्गंगाप्रभवइत्यर्थे स्याज्जन्म
हेतुप्रभवः स्थानंचाद्योपलब्धयइत्यमरः।कीदृशोनगपतिः
अतिसुभगानिशृंगाणिधरतीतिअतिसुभगशृंगधरः।पुनः
पृच्छति।अत्यर्थंबाहुल्येनअर्थरतैः द्रव्यपरैः सेवकसा १
र्थैः भृत्यसंघातैः केसेव्यंतेइतिपृष्टे।प्रत्युत्तरं।प्रभवः स्वामि
नः॥ २४॥ आद्युत्तरजातिः॥ ६० ॥

अयमुदितोहिमरश्मिर्वनितावदनस्यकीदृशःसदृ
शः॥ नीलादिकोपलंभःस्फुरतिप्रत्यक्षतःकस्य २५
गैरिकमनःशिलादिःप्रायेणोत्पद्यतेकुतोनगतः॥य:
खलुनचलतिपुरुषःस्थानादुक्तःसकीदृक्सः॥ २६॥
मध्योत्तरजातिः॥ कस्मिन्वसंतिवदमीनगणाविक
ल्पंकिंवापदंवदंतिकिंकुरुतेविवस्वान्॥

मध्योत्तरस्योदाहरणद्वयंप्रदर्शयन्नाह अयमिति। अयमु
दितोहिमरश्मिश्चंद्रः। वनितावदनस्यस्त्रीमुखस्यकीदृशः।
प्रत्यु। सदृशः समानः। नीलादिकोपलंभः। नीलादिमणीना
मनुभवः कस्यप्रत्यक्षःस्फुरति। प्रत्युत्तरं। सदृशःसचक्षुषः।
उपलंभस्त्वनुभवइत्यमरः २५ गैरिकेति गैरिकंमनः
शिलाच आदिर्यस्यहरितालहिंगुलादेः सः। प्रायेणबाहुल्ये
नकुतःकस्मादुत्पद्यते। प्रत्युत्तरं। नगतःशैलात्। खलुनि
श्चितंयःपुरुषःउक्तःसन्स्थानान्नचलतिसपुरुषःकीदृशः
सदृशः। प्रत्यु॰ नगतोनेत्यर्थः॥ २६ ॥ मध्योत्तरजा
तिः। अंतोत्तरजातेराद्यमुदाहरणमाह कस्मिन्निति। मीन
गणामत्स्यसमूहाःकस्मिन्वसंति। प्र वारिजले। वार्वारीत्यम
रः। किंवापदंविकल्पंवदंति। प्र॰ वा। विकल्पेचेत्यमरः। विव
स्वान्भास्करः। किंकुते। प्र॰ अहः दिनंदिवादिनाहनीचैवघ
स्रोदिवसवासरो। अस्त्रियाचितितारभिधानः। खलुनि
श्चितंपथिकांगनानां अध्वगस्त्रीणांवियोगिनीनामितियाव
त्। उद्वेजकः उद्वेगकारीकः। प्रत्युत्तरं। वारिवाहः जलधरः।

विद्युल्लतावलयवान्पथिकांगनानामुद्वेजको भवति कः खलु वारिवाहः ॥ २७ ॥ शब्दः प्रभूगत इति प्रचुराभिधायी कीदृग्भवेद्वदत शब्दविदो विचिंत्य कीदृग्बृहस्पतिमते विदिताभियोगः प्रायः पुमान्भवति नास्तिकवर्गमध्यः ॥ २८ ॥ अंतोत्तरजातिः ॥ प्र पदांतरादिसंबंधात्प्रश्नवाक्येपि संस्थितं कथितापह्नुतिः सास्यात्लक्ष्यते यत्र नोत्तरं ॥ २९ ॥ पृथ्वी संबोधनं कीदृक्कविना परिकीर्तितं ॥

अब्दो धाराधरो वारिवाहो जलधरोंबुद इति नामाभिधानः । कीदृशो वारीवाहः विद्युल्लतावलयवान् । तडिल्लतावलयेन युक्त इत्यर्थः । तडित्सौदामिनी विद्युदित्यमरः ॥ २७ ॥ । उदाहरणांतरमाह शब्द इति । प्रभूगत इति शब्दः प्रचुराभिधायी प्रचुरवाची कीदृग्भवेदिति हे शब्दविदो वैयाकरणा विचार्यैकथयेति पृष्टे । प्रत्यु० । नास्तिकवर्गमध्यः । नास्तिकवर्गस्य । पंचवर्णात्मकस्य मध्यस्तृतीयो वर्णो गकारो यत्र सः । प्रभूगत इत्यत्र गकारे गते प्रभूत इति शब्दः प्रचुरार्थः । प्रभूतं प्रचुरं प्राज्यमित्यमरः बृहस्पतिमते बौद्धसिद्धांते विदिताभियोगो । ज्ञाततत्त्वः पुमान्प्रायः कीदृग्भवति । प्रत्यु० । नास्तिकवर्गमध्यः । नास्तिकानां वेदबाह्यानां वर्गः समूहस्तत्र मध्यः मध्ये स्थित इत्यर्थः ॥ २८ ॥ अंतोत्तरजातिः ॥ कथितापह्नुते लक्षणमाह । पदांतरे । पदयोरंतरं पदांतरं । आदिना पदादौ पदमध्ये पदांते वायः संबंधस्तस्मात् पदवाक्येपि संस्थितं क

केनेदंमोहितंविश्वंप्रायः केनाप्यनेपराः ॥ ३० ॥ ॥
कस्यमरौदुरधिगमः कमलेकः कथयविरचितावासः ॥
केस्तुष्यतिचामुंडारिपवस्तेकुतोभ्रष्टाः ॥ ३१ ॥ कथि
तापन्हुतिजातिः ॥ यत्रभंगस्यवैषम्यंविषमंतन्निगद्य
ते ॥ वृत्तनामोत्तरंयत्रभ्रष्टंनह्नुत्तनामकं ॥ ३२ ॥

तेमानमुरंपत्रनलक्षतेसाजातिः कथितापन्हुतिसंज्ञास्या
त् ॥ २९ ॥ अस्या आद्यमुदाहरणमाह पृथ्वीति। कवि।
नाविदुषापृथ्वीसंबोधनंकीदृक्पारिकीर्तितं। इदंविश्वंभुवनंके
नमोहितं। प्रायोबाहुल्येनयशः कीर्तिः केनाप्यते। एतत्प्रश्न
त्रयाणांक्रमशः पदांतरादिसंबधात्कवि नेतिपदेनमत्युत्तर
त्रयंवदति। कोऽना। कविना। एवंपदविभागेकृते। हेकोहेपृ
थ्वि कः कामस्तेन ऽना ऽः कामोमदनोमारऽतित्तराभिधानः
। कविनापंडितेन। धीमान्सूरिः कृतीकविरित्यमरः ॥ ३० ॥
उदाहरणंतस्माह कस्येति। मरौधन्वदेशेकस्यदुरधिगमः
दुःखेनाधिगम्यतऽतिदुःप्राप्तिरितियावत् प्रत्युत्तरंकस्य
। कंजलंतस्य। कमलेकृतावासः कृतवसतिः कः प्रत्युः कः।
ब्रह्मा। कः प्रजापतिरुद्दिष्टः। चामुंडाशक्तिविशेषाकैस्तुष्टा।
भवति। प्रत्यु। कैः शिरोभिः। कंशिरोंबुनोरित्यमरः। तेरिपवस्ते
वैरिणः कुतः भ्रष्टाः वदेतिपृष्टेप्रत्यु। कुतः। कुः पृथ्वीततः।
एवंपदांतरादिसंबंधेनकथितापन्हुतिरुक्ता ॥ ३१ ॥ यत्रप्र
श्नेभंगस्यखंडितपदस्याभिमतपश्चाद्भावेनवैषम्यंभवति। त
द्विषमसंज्ञकमुच्यते। पत्रवृत्तनामपधरीत्याउत्तरंनह्नुत्तनाम

कथितापन्हुतिः ॥ ३१ ॥

कीदृग्वनं स्यान्नभयायपृष्टेपदुत्तरंतस्यचकीदृशस्य ॥ वाच्यं भवेदीक्षराजातनंबुकं चाधिशेतेगविकोर्चनीयः ॥ ३३ ॥ अहिंस्रमहिमः ॥ प्रायःकार्येनसुत्यंतिनराःसर्वेत्रकीदृशाः ॥

कीनत्रविषमजातेरुदाहरणमाहदृगिति। कीदृशंवनंभयायन स्यादितिपृष्टे।प्रत्यु०। अहिंस्रं। नसंतिहिंस्राः क्रूरजंतवोयः स्मिंस्तत्। इतिएवंप्रकारेणप्रश्नेकृतेपदुत्तरस्महिंस्रमिति तस्योत्तरस्यकीदृशस्यईक्षराजातंतेत्रोत्यन्नमंबुजलंवा च्यंभवेदितिपृष्टे।प्रत्यु०। अहि।तदेवन्स्रहिंस्रमितिप्रागुक्तमुत्तरं। भंगवैषम्येनाह अहिंकोर्थः। नविद्यतेहिंकारोय स्मिंस्तत्। अस्रमित्यर्थः रोदनंचाश्रमस्त्रुचेत्यमरः। चपुनः गविजलेअर्थात्सीरोदधौकं अधिकः अर्चनीयःपूज्यःशे तेस्वपिति। इतिपृष्टे॥प्रत्यु०। अहिंशेषअः।विष्णुः।स्वर्गेषुप शुवाग्वज्रदिग्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियांपुंसिगौरित्यमरः ३३ ॥ उदाहरणांतरमाहप्रायइति। प्रायोवाहुल्येनसर्वेस्मिन्कृत्येकीदृशाःपुमांसोनमोहमाप्नुवंति। प्रत्यु। सावधानाःसुशिक्षिताइत्यर्थः। प्रश्नांतरंपुनःपृच्छति। नाधा इतिशब्दोनोवाचीकीदृशोभवेद्वदेतिपृष्टे भंगवैषम्येनप्रत्यु। त्तरंददाति। सावधानाः इत्यत्रसो। अधा। नाः। एवंपदविभागेकृते। नाधाशब्दःपूर्वंअधाविधेयःनविद्यतेधाकारोय त्रस अधा धाकारेणनेनाइतिस्थितः। सपुनर्नोशब्दः नावि। धेयःकोऽर्थः। नविद्यतेआकारोयत्रसः। आकारेणनेनइति

नाधाइतिभवेत्छब्दोनोवाचीवद्कीदृशः। ३४ ॥
सावधानाः विषमजातिः॥ गतक्लेशायासाविमलम
नसः कुत्रमुनयस्तपस्यंतिस्वस्याःमुररिपुरिपोःका
चदपिता। कविप्रियः किंस्याल्लवलघुसुत्तैरष्टगुरु।
भिर्बुधावृत्तंवर्णैः स्फुटघटितबंधंकथयत॥ ३५।
शिखरिणी॥ उरसिमुरभिदःकागाढमालिंगिता
स्रसरसिजमकरंदामोदितानंदनेका॥ गिरिसमल

व्यंजनंस्थितंतत्सोविधेयंकोऽर्थः। औकारेणसहितंक
न्नेव्यं। एवंकृतेनैरितिसिद्धं॥ ३४॥ विषमजातिः वृत
नामोत्तरस्याद्युदाहरणमाह गतेति। कश्चनष्टछतिमु
नयः कुत्रतपस्यंति। प्रत्युं शिखरिणिपर्वते। मही ध्रेशि।
खरिक्ष्माभृदहार्यधरपर्वताः इत्यमरः कीदृशाः गतक्ले
शस्यधूमपानादेरायासः श्रमोयेषांते। विमलमकल्मषं।
मनोयेषांते। स्वेआत्मनितिष्टंतीतिस्वस्था आत्मनिष्ठाइत्य
र्थः। स्वोज्ञातावात्मनिस्वंत्रिषात्मीयेस्वोऽस्त्रियांधनइत्य।
मरः मुररिपोर्दैत्यारेः प्रियाका। मत्यु। ई लक्ष्मीः लक्ष्मीरी
कारउच्यते। हेबुधाः कवीनांप्रियंकविप्रियः वृत्तंपद्यंकिं।
स्यात्। प्रत्युत्तरं। शिखरिणिंसन्तत्संज्ञकं वृत्तमित्यर्थः। की
दृशंनववर्णाल्लघवोयत्र अष्टसंख्यागुरुवोयत्रनैर्वर्णैः।
स्फुटंप्रकटंघटितोबंधोयस्मतत्॥ ३५ ॥ ॥
उदाहरणांतरमाह उरसीति। मुरभिदोमुरारेरुरसिवक्षसि
गाढंआलिंगिताकाप्यास्तेतिशेषः। प्र। मालक्ष्मीः। नंदने।

घुवर्णैररणावाख्यातिसंख्यैर्गुरुभिरपिकृताकाछं
दसांवृत्तिरग्र्या ॥ ३६ ॥ मालिनीवृत्तनामजातिः ॥
एकमेवोत्तरंयत्रसुश्लिष्टत्वाद्द्विधाभवेत् ॥ सुप्तिङं
तप्रभेदेनतामाख्यातंतदुच्यते ॥ ३७ ॥ समरशि
रसिसैन्यंकीदृशंदुर्निवारंविगतघननिशीथेकी

इंद्रस्यवनेसरसिजानांपद्मानांमकरंदैःपुष्परसैरामोदि।
ताहर्षिताका प्रत्युत्तरं। अलिनीभृंगी। नंदनंवनमित्यमरः
। छंदसामाद्यादीनामग्र्याउत्कृष्टावृत्तिः। का। प्र०मालिनी।
कीदृशीगिरयोष्टौतत्संख्यस्मानाल्लघवोवर्णायत्रनेः।
अरणावाख्याजातिःसप्ततत्संख्यैर्गुरुभिर्दीर्घवर्णैरपिकृ
ताघटिताएतल्लक्षणं। प्रथममगुरुषट्कंविद्यतेयत्रकांते
तदनुचदशमंचेदक्षरंद्वादशांत्यंवसुभिरथतुरंगैर्यत्रकांते
विरामःसुकविजनमनोज्ञामालिनीसाप्रसिद्धा ॥ ३६ ॥
वृत्तनामजातिः। इदानींधातुरूपोदाहरणेनलकाराःप्र
दर्श्यंतेएकमिति। यत्रप्रश्नेसुश्लिष्टत्वात्संमिलितत्वात्।
एकमेवोत्तरंसुप्तिङंतयोःप्रभेदःसुप्तिङंतप्रभेदस्तेनद्वि।
धाद्विःप्रकारंभवेत्तन्नाख्यातसंज्ञमुच्यते ॥ ३७ ॥ ।
तत्रदशसुलकारेषुवर्तमानार्थेतावल्लटउदाहरणमाह।
समरेति। समरशिरसिसमरस्ययुद्धस्यशिरःअग्रंतस्मिन्।
कीदृशंसैन्यंदुर्निवारंवारयितुमशक्यमितिपृष्टे। प्र०। अभि।
नविघ्नतेभीर्यत्रतत्। शिरोग्रंशिखरमित्यमरः। कीदृशेव्यो
म्निनभाकाशेशोभाकांतिः। प्र०। भवति। भंनक्षत्रंतद्द्युतिभव।

दृशे व्योम्नि शशी भाकमपि विधिवशेन प्राप्य योग्याभि
मानं जगदखिलमनिंद्यं दुर्ज्जनः किंकरोति ॥ ३८॥
अभिभवति॥ पदमनंतरवाचि किमिष्यते कपिप
तिर्विजयी ननु कीदृशः॥ परगुणान्गदितुं गतम
त्सराः कुरुत किं सततं भुवि सज्जनाः॥ ३९ ॥

ति। कथंभूते व्योम्नि। विगतघननिशीथे विगतघनः। अभ्र
रहितो निशीथो रात्रिर्यस्मिन्। विधिवशेन भाग्यवशेन कस्य
पियोग्यस्य सत्पुरुषस्याभिमानं अहंकारं प्राप्य लब्ध्वा अ
निंद्यं स्तुत्यमखिलं जगद्विश्वं दुर्जनः खलः। किं करोति प्र
। अभिभवति। पराभवति। तिरस्करोतीत्यर्थः। भाग्यस्त्री
नियतिर्विधिरित्यमरः। अभिपूर्वभूसत्तायामित्यस्य धा
तोः सामान्यपुरुषस्यैकवचनं परस्मैपदं॥ ३८ ॥ ॥
लट् उदाहरणांतरमाह। पदमिति। अनंतरार्थं वदती
त्यनंतरवाचि॥ पदं विभक्त्यंतं। किमिष्यते। प्रत्यु। अनुइ
त्यव्ययमनंतरवाचि। पश्चात्सादृश्ययोरनुइत्यमरः। ननु
निश्चितं। कपिपतिः अर्थात्सुग्रीवः। विजयी जयशीलः।
कीदृशः प्र। सरामः। रामेण रघुनाथेन सहितः। हे गतम
त्सराः मात्सर्यरहिताः सज्जना भुवि पृथिव्यां परेषां गुणा
न्गदितुं वक्तुं सततं किं कुरुतेति पृष्टे प्र। अनुसरामः। अनु
सारं कुर्मः ननु स्मीति शामइत्यर्थः। अनुपूर्वसृगतावित्य
स्य धातोरुत्तमपुरुषस्य बहुवचनं परस्मैपदं। अत्र सरा
मइति सुबंतं। अनुसरामइति तिङंतं। अनयोः प्रभेदेन

अनुसरामः त्वद् ॥ वदतिराममसुष्यजघन्यजोव
सतिकुत्रसदालसमानसः। अपिचशक्रसुतेनति
रस्कृतोरविसुतःकिमसौविदधेत्वया॥ ४० ॥
अनुजगदहे॥ भवतिगमनयोग्याकीदृशीभूरथानां
किमतिमधुरमम्लंभोजनांतेप्रदेयं॥ प्रियतमवदनी

नामाख्यातसंज्ञप्रश्नमितिसिद्धं॥ ३९ ॥ लिदल
कारस्योदाहरणमाह वदतीति। रामंरघुनाथंअमुष्यज
घन्यजः अर्थादस्यरामस्यावरजः लक्ष्मणोवदति। किं
वदतीत्याह। सदासर्वकाले अलसमानसः। अनुद्यम
शीलः कुत्रवसति। एवंलक्ष्मणेनपृष्टोरामः प्रत्युत्तरं
ददाति अनुजगदहे। हे अनुजकनिष्ठभ्रातः गदहे सद
नापुनरपिलक्ष्मणः पृच्छति। अपिचशक्रसुतेनवालि
नातिरस्कृतोनिर्भर्त्सितः। असौरविसुतःसुग्रीवःत्वया
किंविदधेकिंकृतःएवंपृष्टोरामोवदति अनुजहेअनु
गृहीतइत्यर्थः। अनुपूर्वेगहउपादानइत्यस्यधातोः
सामान्यपुरुषस्यैकवचनंआत्मनेपदम्॥ ४० ॥
लिटोद्वितीयमुदाहरणमाह भवतीति। रथानांशक
टानांगमनयोग्याभूःकीदृशीभवति। प्रत्युत्तरं।समा
उच्चावचरहिता। भोजनांतेभोजनावसाने अतिमधु
रमम्लंकिंप्रदेयं। प्रत्युत्तरं। दधि। हेप्रियतमा। नीचाभं
त्रणेनीचसंबोधनेकिंपदं। प्रत्युत्तरं। रेइतिपदं। कुम
तिकृतविवादाः कुमत्याकुबुद्धिनाकृतोविवादःकल

चामंत्रणे किंपदं स्यात् क्रमतिकृतविवादाश्चक्रिरे।
किंसदर्थैः ॥४१॥ समादधिरे॥ लिट्॥ वद
तानुत्तमवचनं ध्वनिरुच्चैरुच्यते स कीदृक्षः॥ त
व सुहृदो गुणनिवहे रिपुनिवहं किंनु कत्तोरः।४२
अवमंतारः॥ कीदृक्तोयं दुस्तरं स्यान्निती थैः ।

हो येस्ते तादृशाः पुरुषाः सदर्थैः समीचीनः अर्थः प्र
योजनं येषां ते सदर्थास्तैः सदर्थैः पंडितैः किंचक्रिरे किं
कृताः वदेति पृष्टे। प्रत्युत्तरं। समादधिरे। समाधीनीकृताः
प्रबोधिता इति अर्थः अर्थोभिधेयरैवस्तुप्रयोजननिवृत्ति
ष्वित्यमरः सम पूर्वेडु भृञ् धारणपोषणयोरित्यस्य धा
तोः सामान्यपुरुषस्य बहुवचनमात्मनेपदं ॥ ४१ ॥
इदानीं लुट् उदाहरणमाह वदेति। कश्चनपृच्छति। नउ
त्तमं अनुत्तमं। अनुत्तमं च तद्वचनं च अनुत्तमवचनं व
द त कथयतेति। पृष्टे। प्रत्युत्तरं। अवमं निकृष्टमित्यर्थः
निकृष्टप्रतिकृष्टार्वरेफयाप्याव माधमा इत्यमरः। यो
ध्वनिः शब्द उच्चैरुच्यते स ध्वनिः कीदृक्षः प्रत्युत्तरं। ता
रः अत्युच्चो ध्वनिरित्यर्थः तारोत्युच्चैस्त्रयस्त्रिष्वित्यमरः
तथा तव सुहृदस्तव मित्राणि गुणनिवहे। गुणसमूहे।
रिपुनिवहं शत्रुसमूहं। नु इति वितर्के। किं कत्तोर इति
पृष्टे। प्रत्युत्तरं। अवमंतारः। अवहेलनाकर्त्तार इत्यर्थः
अवपूर्व मन ज्ञान इत्यस्य धातोः सामान्यपुरुषस्य बहु
वचनं परस्मैपदं ॥४२॥ तस्य चोदाहरणांतरमाह।

का पूज्यास्मिन्खड्गमामंत्रयस्व॥ दृष्ट्वा धूमं दूरतो मानविज्ञाः किं कर्त्तास्मि प्रातरेवाश्रयाशम् ॥ ४३ ॥ अनुमातासे। लृट्लकारः॥ कामुकास्युः कयानीचाः सर्वः कस्मिन्प्रमोदते॥ अर्थिनः प्राप्य पुण्याहं करीष्यध्वे वसूनि किं॥ ४४ ॥ ७ ॥ ७ ॥

कीदृगिति। कीदृशं नोयं जलं। नद्यैभिक्षुस्तिनीर्थुलस्यनि। नीर्षैः पुरुषस्य दुस्तरं नद्युमशक्यं स्यात्। प्र०। अनु। नवि द्यते नो यत्र तत्। नोकाररहितमित्यर्थः। अस्मिन्लोके पूज्या गरीयसी का। प्र०। माता जननी। गर्भधारणपोषाभ्यां तेन माता गरीयसीति स्मरणात्। खड्गं असिं आमंत्रयस्व। प्र०। असे। असिः खड्गस्तस्य संबुद्धौ हे असे। खड्गे तु निस्त्रिंशचंद्रहासासिरिष्टय इत्यमरः। हे मानविज्ञाः अनुमानकुशलाः प्रातः प्रभाते दूरतो धूमं दृष्ट्वा अहं आश्रयाशं पावकं प्रति किं कर्त्तास्मि। प्र०। अनुमातासे। यत्र धूमस्तत्र वह्निरित्याद्यनुमानेनानुमितिं कुरुष इत्यर्थः। आश्रयाशो बृहद्भानुः कृशानुः पावको नल इत्यमरः। अनुपूर्वमाङ्मान इत्यस्य धातोर्मध्यमपुरुषस्यैकवचनं॥ ४३ ॥ लृट्लकारस्योदाहरणं श्लोकद्वयेनाह कामुका इति। कामिनः कयानीचास्युर्निकृष्टा भवंति। प्र०। दास्या दासी चेटी तया। सर्वः प्रजा लोकः कस्मिन्प्रमोदते हर्षमाप्नोति। प्र०। महे उत्सवे। मह उद्धव उत्सव इत्यमरः। पुण्याहं पुण्यदिनं प्राप्य अर्थिनः याचकान् प्रति वसूनि द्रव्याणि किं करिष्यध्वे। भो दातार इत्यध्याहारः। प्र०। दास्या

दास्यामहे॥ कोदुःखीसर्वकार्येषुकिंभृशार्थेस्यवा
चकं॥योपत्रविरतोनित्यंननतःकिंसकरिष्यति॥४५॥
प्रयास्यतिॡट्॥ विद्यतइतिसमानार्थःशब्दःकोऽ
चिरयतिमुद्रांकिं॥ कथमपियदिकोपःस्यात्तंसुज
नःकिंकरोतुवद॥४६॥ ७ ॥ ७ ॥

महे।दास्यामइत्यर्थः। डुदाञ्दानेइत्यस्यधातोरुत्त
मपुरुषस्यबहुवचनमात्मनेपदं॥ ४४ ॥ ॥
कइति।सर्वकार्येषुदुःखीदुःखयुक्तःकः।प्र०।प्रयासीप्र
यासःश्रमोऽस्यास्तीतिप्रयासीश्रांतइत्यर्थः।भृशार्थे।
स्यातिशयार्थस्यवाचकंकिं।प्र०।अति। अतिशयेप्य
तीत्यमरः। नित्यंयःपुमान्यत्रविरतःउदासीनतांप्रा
प्तःसपुमान्नतस्तदनंतरंकिंकरिष्यति।प्र०।प्रयास्य
तिगमिष्यतीत्यर्थः।प्रपूर्वयाप्रापणेइत्यस्यधातोः
सामान्यपुरुषस्यैकवचनंपरस्मैपदं॥ ४५ ॥
ॡट्लकारः॥ इदानींलोटउदाहरणंद्वाभ्यामाह वि
द्यतइति। विद्यतइत्यस्यसमानार्थःतुल्यार्थवाचीश
ब्दःकः।प्र०।संति विद्यतइत्यर्थः।मुद्रांराजनामांकित
मुद्रांकिंअचिरयतिअस्थिरीकरोति।प्र०।अजतुलास्सार
हितं।राशास्त्वाशाजतुस्त्रीवइत्यमरः।यदिकथमपिके।
नापिहेतुनाकोपःक्रोधःस्यात्तदातंप्रतिसुजनःकिंकरो
तुवदेतिपृष्टे।प्र०।संसजतुपरित्यागंकरोतु।संपूर्वस्त्यजहा

संत्यजतु ॥ मेघात्ययेभवतिकासुभगावगाह्यात्वंनं वसंततिलकंक्रियदक्षराणां ॥ भोभोकदर्पपुरुषाविषुवद्दिनेचवित्तंचनः सुवहुतत्क्रियतांकिमेतत् ॥ ४७ ॥ नदीयतां स्तोटू ॥
कामाद्यतिमकरंदैस्तनयंकमसूतजनकराजसुता कथयकृषीवलसस्यंपक्वं किमचीकरस्त्वमपि ४८ ॥
अस्तीत्तवं ॥

नावित्यस्यधातोः सामान्यपुरुषस्यैकवचनंपरस्मैपदं ॥ ४६ ॥ मेघेति। मेघात्ययेमेघावसानेशरत्काल्लेसुभगावगाह्याकामज्जनयोग्याका। प्र०। नदीसरित्। वसंततिलकसंज्ञकंपद्यंकियदक्षराणां। प्र०। इयतां। एतद्वृत्तोक्तानां। भोभोकदर्पपुरुषाः निकृष्टजनाः विषुवद्दिनेसंक्रांतौ। नः अस्माकंवित्तंधनंवहुविपुलमस्तितदेतदस्माभिः किंक्रियतां। प्र०। नदीयतांभवद्भिर्नीदीयतामित्यर्थः। उदाञ्दानइत्यस्यधातोः सामान्यपुरुषस्यैकवचनमात्मनेपदं ॥ ४७ ॥ ॥
लुङ्उदाहरणं श्लोकाभ्यामाह केति। मकरंदैः पुष्परसैः कामाद्यतिमत्ताभवति। प्र०। स्त्री। भृंगी। जनकराजसुताजानकीकंपुत्रमसूतसुषुवे प्र०। लवाभिधंहेकृषिवलकृषकपक्वसस्यंधान्यं त्वमपिकिंअचीकरः किंकृतवानसि। प्र०। अस्तीत्तवं। लुनंतंपुरुषंप्रेरितवानस्मीत्यर्थः। लुञ्छेदनेइत्यस्यधातोरुत्तमपुरुषस्यैकवचनं ॥ ४८ ॥ ७ ॥ ७ ॥

पृच्छतिपुरुषः केऽस्यां समभूवन्वज्रकृत्तपक्षनयः ॥ बहुभयदेशं जिगमिषुरेकाकी वार्यते च कथं ४९ मानवनगाः लुङ् ॥ किमकरवमहं हरिर्महीध्रं स्वभुजबलेन गवां हितं विधित्सुः ॥ प्रियतमवदनेन पीयते कः परिणतबिंवफलोपमः प्रियायाः अधरः ॥ ५० परिहरति भयात्त्वां हितः ॥

पृच्छतीति। कश्चन पुरुषः पृच्छति। अस्यां भूमौ वज्रकृत्तपक्षनयः कुलिशछिन्नपक्षमूलाः के समभवन् वभूवुः। प्र॰। मानवनगाः। हे मानव मनुष्य नगाः। शैलाः। स्त्री पक्षतिः पक्षमूलमित्यमरः। चः पुनरर्थे। बहुभययुक्तं देशं जिगमिषुं गंतुमिच्छुरेकाकी असहायः कथं वार्यते निषिध्यते साधुभिरिति शेषः। प्र॰। मानवनगाः। हे अनवन। न विद्यते। अवनं रक्षणं यस्य सः। हे रक्षाहीन। मागाः मागच्छ। गा। ल्लङ्गतौ इत्यस्य धातोर्मध्यमपुरुषस्यैकवचनं परस्मैपदं ॥ ४९ ॥ लुङ्। लुङ् उदाहरणद्वयं द्वाभ्यामाह किमिति। अहं हरिः। कृष्णः स्वबाहुसामर्थेन गवां हितं विधातुमिच्छुः महीध्रं शैलं किं अकरवं। किं कृतवान् अस्मि। प्र॰। अधरः धृतवानसि। पुनः पृच्छति। प्रियतमवदनेन प्रेष्ठमुखेन दयितायाः पक्वबिंबीफलवदाताम्रः कः पीयते। प्र॰। अधरः ओष्ठः। धृञ् धारणपोषणयोरित्यस्य धातोर्मध्यमपुरुषस्यैकवचनं ॥ ५० ॥ ॥

परीति। अहितः शत्रुस्त्वं भयात्किं परित्यजति। प्र॰ समरं युद्धं। अयेति। प्रश्नः। कदापि कस्मिन्नपि काले इह पृथिव्यां भीरुः।

किंकस्य कदापि न विदन्तीह भीरुः॥ कथय किमकरोरिमां धरित्रीं नृपतिगुरो नृपते स्वयं त्वमेकः ५१। समरंजयं॥ लङ्.। कीदृक्सेना भवति रणे दुर्वारा वीरः कस्मै स्पृहयति लक्ष्मीमिच्छन्॥ कासंबुद्धिर्भवति भुवः संग्रामे किं कुर्वीध्वं सुभटजना भ्रातृव्यान् ॥५२॥ पराजयेमहि ॥ कंसारातेर्वेदगमनं केन स्यात्कस्मिन्हृष्टिं लभते स्वल्पेकुः॥ ॥

कं न विदन्ति नाप्नोति। प्र-। जयं। मंगलानंतरारंभप्रश्नका। त्स्न्येष्वथो अथेत्यमरः। हे नृपते षड्भिः संध्यादिभिर्नृपनिगुणैर्स्त्वमेकः स एव स्वयमात्मना मां पृथ्वीं किं अकरोः किं कृतवानसि। प्र-समरंजयं। अनुरंजितवानस्मि। संधिर्ना। विग्रहो यानमासनं द्वैधमाश्रयः षड्गुणा इत्यमरः। संपूर्वे रंजरागे इत्यस्य धातोरुत्तमपुरुषस्यैकवचनं॥ ५१ ॥ लिङ्. उदाहरणद्वयं द्वाभ्यामाह कीदृगिति रणे कीदृशी च मूः वारयितुमशक्या प्रत्युत्तरं। परा उत्कृष्टा। वारः सुभटः धनं वांछन्कस्मै स्पृहयति वांछां करोति। प्र-। आजये शद्धा प। समित्याजिसमिद्युद्ध इत्यमरः जित्वा वा भोक्ष्यसे महीमिति स्मृतेः। भुवः पृथिव्याः संबुद्धिः का। प्र-। महि हे पृथ्वि। हे सुभटजनाः सूरा रणे भ्रातृव्यान् शत्रून् किं कुर्वीध्वं किं कृत। प्र-। पराजयेमहि। पराजयं कर्मः परापूर्वे जि जये इत्यस्य धातोरुत्तमपुरुषस्य बहुवचनं। भ्रातृव्यो भ्रातृजद्विषा वित्यमरः॥ ५२॥ कंसारातेः कृष्णस्य गमनं केन। प्र-

कः सर्वेषाम् अमूर्त्त वीराः किं कुर्यास्त्वं सुजनसशोकलोकं॥ ५३ ॥ विनोदयेयं॥ लिङ्॥ बारणेन्द्रो भवेत्कीदृक् प्रीतये भृंगसंहतेः॥ यद्यर्थस्यं तदास्मै किमकरिष्यमहं धनं॥ ५४ ॥ समदास्यः कालेदेशे यथायुक्तं नरः कुर्वन् प्रैति कां॥ भुक्तवंतावलप्स्ये नौ किमन्नमकरिष्यतां॥ ५५ ॥

विना विःपक्षी तेन। स्वल्पकामः हर्षेः कस्मिन्प्राप्नोति। प्र॰। उदयेहृद्ये सर्वेषाम् अभंकं प्राहुः। प्र॰। अयं अयः शुभावहो। विधिस्तं। हे सुजन शोकेन सहितं लोकं किं कुर्याः किं करोषि। प्र॰। विनोदयेयं। विनोदयामि। विपूर्वेनुदप्रेरणे इत्यस्य धातोरुत्तमपुरुषस्यैकवचनं॥ ५३ ॥ लिङ् उदाहरणाद्वयं द्वाभ्यामाह वारणेन्द्र इति। कीदृशो गजराजः भृंगसमूहस्य प्रीतये भवेत् प्र॰। समदास्यः। मदेन सहितमास्यं मुखं यस्य सः। यदि न्य्रयस्यं यत्नमकरिष्यं तदास्मै विप्राय धनमहं किमकरिष्यं। प्रत्युत्तरं। समदास्यः। तदा त्वया विप्राय धनं दत्तं स्यादित्यर्थः। डुदाञ् दाने इत्यस्य धातोर्मध्यमपुरुषैकवचनं परस्मैपदं॥ ५४ ॥ कालइति। नरः कालेदेशे यथायुक्तमुचितं कुर्वन् कां प्राप्नोति। प्र॰। अहास्यतां। हास्यभावं नाप्नोति भुक्तवंतौ भोजनं कृतवंतौ प्राक्। पुनश्च यदि अन्नमोदनादि भक्ष्यमलप्स्यतां प्राप्तवंतौ तदा नौ अन्नं किमकरितां। प्र॰। अहास्यतां। अस्यत्यागमकरिष्यतामित्यर्थः। ओहाक् त्यागे इत्यस्य

अहास्पतां॥ स्तृड्.नामाख्यातजातिः॥ ज्ञेयंता र्क्यंदृशातार्क्यंसोत्रैस्सूत्रोत्तरैस्तथा शाब्दीयंशब्दसं ज्ञाभिःशास्त्रजंशास्त्रभाषया॥ ५६॥ हिमा नीस्थगिरैस्यातांकीदृशौशशिभास्करौ॥ कःपूज्यः कःप्रमारोभ्योनप्रभाकरसंमतः॥ ५७॥ ॥ अभावः॥ केप्रवीराःकुतोहीनंजीर्णंवासोंशुमां श्चकः॥ निराकरिष्णवोवात्वंयोगाचाराश्चकीदृ शाः॥५८॥ विज्ञानवादिनः॥ इतितार्क्यंजातिः।

धातोःसामान्यपुरुषद्विवचनंपूर्व्वेपदं॥ ५५॥ ॥ स्तृड्.नामाख्यातजातिः। ज्ञेयमितितर्कोत्तरेणतार्क्यं ज्ञेयं। एवंतत्तदुत्तरेणसौत्रंशास्त्रजमितिचतुर्विधप्रश्न मिति॥ ५६॥ नेष्वतार्क्यंजातेरुदाहरणद्वयंद्वाभ्या माहहिमानीति। हिमसंहत्याछादितौचंद्रसूर्यौकीदृशौ भवेतां। प्रत्युत्तरं। अभौ।भारहितौ। हिमानीहिमसंहतिः ।पूज्यःकः।प्र।अःविष्णुः।प्रमाणेभ्यःसकाशात्कःप्र। भाकरस्यजैमिनीयस्यसंमतोनभवति। प्रत्युत्तरं।अ। भावःअभाववादइत्यर्थः॥ ५७॥ ॥ कइति।निपुणाःके।प्र।विज्ञाःकुशलाः।जीर्णंवस्त्रं कस्मात्।हीनं।प्र।नवात्।नूतनात्।अंशुमान्सूर्यःकः प्र।इनः।इनःसूर्येप्रभावित्यमरः। वात्वंवोद्धं निरा करिष्णवोनिराकर्त्तुकामाः योगाचाराः।अध्यात्मनि ष्ठाःकीदृशाः।प्र।विज्ञानवादिनः। अद्वैतवादिनः ॥ ५८॥ तार्क्यंजातिःसौत्रजातेरुदाहरणं द्वा

को नयति जगदशेषं स्यमस्य विभरां बभूव कोविष्णुः ॥ नीचः कुत्र सगर्वः पाणिनिसूत्रं च कीदृक्षं ॥ ५९ ॥ यमोगंधने ॥ किंस्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी भवति ॥ नीचः केन सगर्वः सूत्रं चंद्रस्य कीदृक्षं ॥ ६० ॥ विशेषणमेकार्थेन ॥ सौत्रजातिः ॥ नश्लाघते खलः कस्मै सुतिङं तं किमुच्यते ॥ ॥ ७ ॥

भ्यामाहकइति। सकलं विश्वं मृत्युवशं कः प्रापयति। प्र०। यमः। अंतकः। अथानंतरं विष्णुः किं विभरां बभूव किं धृतवान्। प्र०। अगं शैलं गोवर्द्धनाभिधं। क्षुद्रः कस्मिन् साभिमानः। प्र०। धने वित्ते। च पुनः पाणिनिसूत्रं कीदृशं। प्र०। यमोगंधन। इत्येवंरूपं॥ ५९ ॥ ॥ किमिति। विशेषस्य निष्ठा स्थितिर्यस्मिंस्तद्विशेष्यनिष्ठं किं स्यात्। प्र०। विशेषणं। पूरणी संख्या का। वदत विज्ञा इति शेषः। प्र०। एकाएकेति संख्यापूरणे। नीचः क्षुद्रः केन समदः प्र०। अर्थेन विभवेन चंद्रवैयाकरणस्य सूत्रं कीदृशं। प्र०। विशेषणमेकार्थेन इति स्वरूपं। इंद्रश्चंद्रः काशिराजः कृत्स्नः पिशली शाकटायनः। पाणिन्यमरजैनेंद्रा जयंत्यष्टादिशाब्दिका इति ॥ ६० ॥ सौत्रजातिः॥ शाब्दीयजाते रुदाहरणद्वयं द्वाभ्यामाहनेति। दुर्जनः कस्मै न श्लाघते न प्रशंसति। प्र० परस्मै अन्यस्मै । श्लाघा मता प्रशंसायां परिचर्याभिलाषे

लादेशानांनवानांचतिङां किंनामकथ्यतां॥ ६१॥ परस्मैपदं॥ किमव्ययतयाख्यातंकस्यलोपोवि। धीयते ब्रूतशब्दविदोज्ञात्वासमाहारःकउच्यते ॥ ६२॥ स्वरितः। शाब्दीयजातिः। जलदात्ययेभवतिकः समदः सुभगंचकिंकमधरन्सुरभिन् कटुनैलमिश्रितगुडोनिपतंविनिहंतिकंत्रिगुणसप्तदिनेः॥ ६३॥ श्वासरोगं॥ ७॥ ७॥

वि खयोरितिर्निश्वः। सुप्तिङौ अंतेयस्यतत्किमुच्यते। प्र· पदंसुप्तिङंतंपदमितिसूत्रात् विभक्त्यंतमित्यर्थः। लडादेशानांनवानांतिङ्वचनानांनामकिंउच्यतां। प्र· परस्मैपदं। नवपरस्मैपदानि॥ ६१॥ किमिति। अव्ययस्यभावः अव्ययतातया किंप्रसिद्धं प्र·। स्वरः। स्वरव्ययमित्यमरः। लोपः कस्यक्रियते। प्र·। इतः इत्संज्ञकस्य। यस्येत्संज्ञातस्यलोपः॥ हे शाब्दिकावैयाकरणाः विचार्यवदत। समाहारसंज्ञकः कः उच्यते। प्र· स्वरितः। समाहारत्स्वरितः॥ ६२॥ शाब्दीयजातिः॥ शास्त्रजातेरुदाहरणद्वयंद्वाभ्यामाह जलदेति। जलदात्यये अर्थात्शरत्कालेसमदः सकामः कः। प्र· श्वांकुरः चपुनः जलदात्ययेसुभगंकिं। प्र· सरः सरसीसुरभिः। कंध्नतवान्। अगंशैलंकटुनैलेनयुक्तोगुडः त्रिगुणसप्तदिनैः एकविंशतिभिर्दिनैः कंनाशयति। प्र· श्वासरोगं॥ ६३॥ ७॥ ७॥ ७॥

कीदृक्प्रातर्दीपवर्त्तैः॥ शिखास्पादुष्टुः पृच्छत्याभजन्ते मृगाः किं॥ देवामात्ये किंगते प्रायशो सौ लोकः कुर्यान्नो विवाहं विविक्तः॥ ६४॥ विभाकरभवनं॥ शास्त्रजातिः॥ वर्णैः सर्वोत्तरं यत्र तद्दूरोत्तरमुच्यते॥ वाक्यं यत्रोत्तरं तत्तु वाक्योत्तरमिति स्मृतं॥ ६५॥ कौ शत्रू भुवि विख्यातौ शोकं वदति किं पदं॥ को भीष्टोत्र दरिद्रस्य सेव्यन्ते के च भिक्षुभिः॥ ६६॥ वीहाराः॥ ॥

कीदृगिति। दीपवर्त्तैः शिखा ज्वाला प्रातःकाले कीदृक्स्यात्॥ प्र०। विभा॥ विच्छाया। उष्ट्रः करभः पृच्छति। मृगाः किमा भजन्ते। प्र० करभवनं। हि करभवनं। देवामात्ये गुरौ किं स्थानं गते प्रायशः असौ लोकः विविक्तो विवेकी। विवाहं नैव कुर्यान्न करोति। प्र०। विभा करभवने विभाकरः सूर्यस्तस्य भवनं सिंहराशिः। सिंहस्य चाधिपः सूर्य इति भुवनदीपः। सिंहस्थे च गुरौ जातु विवाहो नैव शोभन इति॥ ६४॥ शास्त्रज्ञातिः॥ यत्र प्रश्ने पृथक्पृथग्वर्णैः सर्वोत्तरं स्यात्तद्दूरोत्तरसंज्ञमुक्तं। यत्र तु वाक्यमुत्तरं तद्वाक्योत्तरं स्मृतमिति॥ ६५॥ काविति। पृथिव्यां कौ शत्रू विख्यातौ। प्र०। वी। उष्ट्रश्च श्वेनो वी। हरकामौ। किं पदं शोकं वदति। प्र०। हा। इत्यव्ययं। हा विषादे च शोके चेति विश्वः। अत्र लोके दरिद्रस्याभीष्टः कः। प्र० राः। अर्थः। च पुनः भिक्षुभिः के सेव्यन्ते। प्र०। वीहाराः। बौद्धायतनानि। वीहारो भ्रमणे स्कंधे लीलायां सुगतालय इति विश्वः॥ ६६॥

किंमुंचन्तिपयोवाहाःकीदृशीहरिवल्लभा॥पूजायांकिंप
दंकोऽग्निःकःकृष्णेनहतोरिपुः॥कंसासुरः॥वर्णोत्तरजातिः
दधौहरिःकंशुचिकीदृगभ्रंइच्छत्यकःकिंकुरुतेस
शोकः॥ श्लोकंविधायापिकिमित्युदारःकविर्न
नोषंसमुपैतिभूपः॥६८॥ अगमकमकरोदिति

किमिति।मेघाःकिंमुंचन्तिप्र॰।कं।जलमित्यर्थः।हरि
प्रियाकीदृशी।प्र॰।सा॰।अः विष्णुःतेनसहितासा।पूजा
यांपदंकिं।प्र॰।सुइत्यव्ययं।अग्निःकः।प्र॰।रः।रःपावकेच
तीक्ष्णेचेतिविश्वः।कृष्णेनकोरिपुर्हतः।प्रत्युत्तरं।कंसा
सुरः॥६७॥ वर्णोत्तरजातिः। ।निडुसुवंनचपोवा
कंवाक्योत्तरजातेरायमुदाहरणमाहदधाविति।हरि
र्विष्णुःकंदधौ।प्र॰।अगं।शैलंगोवर्द्धनाभिधं॥शैलवृ
क्षौनगावगा इत्यमरः॥ शुचिशुक्लं अभ्रंमेघःकीदृक्।प्र॰
।अकं।जलरहितं।कंशिरोंबुनोरित्यमरः।नविद्यतेकं
सुखंयस्मिन्सःअकःसुखरहितःइच्छति।सशोकःपु
रुषःकिंकुरुते।प्र॰।अक रोदिति।हेअकसशोक।रो
दितिरोदनंकरोति।कंसुखेपिप्रकीर्तितमितिधनंज
यः।सनःइच्छतिश्लोकंविधायापिपद्यंकृत्वापिउदा
रःकविःमहान्कविः।किमिति हेनोःभूपःपुनरपिनोषं
नाप्नोति।प्र॰।अगमकमकरोदिति। ।गमयतिबो
धयतीतिगमकंनगमकंअगमकं।अबोधकंकृतवा
निति हेनोः।उदारोदातृमहतोरित्यमरः॥ ६८ ॥

लक्ष्मीधरः पृच्छति कीदृशस्यान्नृपः सपत्नैरपि दु
र्निवारः॥ अकारि किं ब्रूहि नरेण सम्यक् पितृत्वमा
रोपयितुं स्वकीयं॥ ६८॥ समजनि तनयः वाक्योत्तरजातिः
इति श्रीधर्मदासविरचिते॥ विदग्धमुखमंडने
द्वितीयः परिच्छेदः॥ श्लोक एवोत्तरं यत्र तत्त
श्लोकोत्तरमुच्यते॥ खंडोत्तरं भवेदर्द्धश्लोकात्पा
दात्तदुत्तरं॥ १॥ कं देवं के चैयंति स्फुटरुचि

तस्यैवोदाहरणांतरमाह लक्ष्मीधर इति। विष्णुः पृच्छ
ति कीदृशो नृपः सपत्नैरपि शत्रुभिः कृत्वा दुर्निवारो वार
यितुमशक्यः स्यादिति पृष्टे। उ०। समजनि तनयः। मा ल
क्ष्मीस्तया सहितः समस्तस्तं बुद्धौ हे समस लक्ष्मीकवि
ष्णो जनि तनयः। जनितउत्यादितो नयः पयोन्मोराजध
र्मो येनसः। सम्यक् पास्यात्तयास्वकीयं पितृत्वमात्मविष
ये पितृभावमारोपयितुं नरेण पुरुषेण किमकारि। किं क
तं। उ० समजनि तनयः पुत्रः समजनि समुत्यादितः॥ ६८
वाक्योत्तरजातिः॥ कायस्थतारा चंद्रेण कृतावि द्वन्म
नोहरा। टीकेयमस्यां पूर्णोयं परिच्छेदो द्वितीयकः॥ यस्मि
न्प्रश्ने श्लोक एवोत्तरं तत् श्लोकोत्तरसंज्ञं। अर्द्धश्लोको
त्तरात् खंडोत्तरसंज्ञं पादोत्तरात्त्यादोत्तरसंज्ञमुच्यते १
तत्र श्लोकोत्तरस्योदाहरणं द्वाभ्यामाह। कमिति। कं देवं
। के ईयंति पूजयंति। उ०। अं। विष्णुं। जना मनुष्याः निशि
रात्रौ स्फुटरुचिः। प्र० कटं दुनोति किं। उ० भं नक्षत्रं। दुःखपुंज

निशि किं कीदृशी दुःखिनी स्त्री कीदृक् चक्रं सदास्ते क्व च तव विजयः प्रावृषः कीदृशं खं ॥ कामाहुः प्रेतयोग्यां कथय सुकृतिनः कीदृशास्युः पुमांसः कं धत्ते कं च धत्ते गगनतलमलं प्रेक्षणीयं जनानां ॥ २ ॥
प्लक्षः कीदृक् कास्ति स्फुटनवकुसुमाशोककाले प्रासाद्य कालं किं मुंचंत्यंबुवाहा भवदरिनिवहे संज्वरः किं भवस्थ ॥

स्त्री । कीदृशी । प्र- । अहावाशृंगारभावरहिता । चक्रं र । थांगं । सदा कीदृशास्ते तिष्ठति । प्र- । अरि । अरा रिः कीला निविद्यंते यस्मिंस्तत् अरि । च पुनः तव विजयः क्व । प्र । वाहौ भुजे ॥ प्रावृषः वर्षाकालस्य खमाकाशं कीदृशं । प्र- । घनि घना मेघाः संति यस्मिंस्तत् । प्रेतस्य शवस्य योग्यां कामाहुः । प्र- चितां प्रेतशय्यां । सुकृतिनः पुरायात्मा नः कीदृशाः वराः श्रेष्ठाः गगनमेव गगनतलं आकाशं कं धत्ते । प्र- । कदंवकं । कं जलं इदानीं निकंदो मेघस्तं । व । कं पक्षिविशेषं च । कीदृशं गगनतलं । जनानामत्यर्थं प्रेक्षणीयं द्रष्टुं योग्यं ॥ २ ॥ स्फुटं प्रव्यक्तं । नवकुसुमा । शोककाले । अर्थाद्वसंतसमये आसाद्य अधिगम्य प्लक्षः पर्कटी दृक्षः कीदृक् कास्ति द्योतते । प्र- । दली । दलानि पर्णानि संत्यस्मिन्निति । प्लक्षो जटी पर्कटी स्यादित्यमरः अंबुवाहा जलदाः किं मुंचंति । मुच्लृ मोचने । प्र- । कं । जलं । भवदरिनिवहे भवतां शत्रुसमूहे संज्वरः संतापः किं भवः । किं रुतः । दरजः त्रासजः संतापः संज्वरस्समावित्य

किंनेत्रप्रावृतिस्यादतिशयलघवःकेचकोव्रीहि
भेदःप्रायेणप्रावृषेण्या प्रियतमदिवसाःकीदृ
शाःकीदृशाश्च॥ ३॥ अंजनाभमहावारिवा
होघनिचितांवराः॥ कदंबकंदलीकंदरजःप
स्मलवायवः॥ ४॥ कुर्यादुद्वेगवंतंकमपिनिशि
सरःकीदृशंकास्तिवक्त्रेवक्तानिंद्यःकयास्यात्‸

नेत्रयोःप्रावृतिप्रावरणंकिं।उ॰पक्ष्म।नेत्रलोम।पक्ष्मा
क्षिलोम्निकिंजल्केतंत्वंशेप्यणीयसीत्यमरः।अति
शयेनलघवःके।उ॰।लवाः।अणवः।लवलेशकणा
णवइत्यमरः।व्रीहिभेदःकः।उ॰।यव।हेप्रियतम।अति
प्रेष्ठ।प्रायेणबाहुल्येन।प्रावृषेण्याःवर्षाकालीनादिव
साःकीदृशाःकीदृशाश्चभवंति।उ॰पुनःसर्वअंजनाभे
त्यादि।अंजनाभाःकज्जलकांतयोयेमहांतोवारिवा
हामेघास्तेषामोघैःसमूहैर्निचितंव्याप्तमंवरमाका
शंयेषुतादृशाः।पुनश्च।कदंवोनीपःकंदलीवृक्षभेदः
कंदोवकुलद्रुमःकदंबकंदलीकंदानांरजोभिःपरागैः
पक्ष्मलाःकुंठितावायवोयेषुते।कलध्वनौकंदलीस्या
न्मृगवृक्षविशेषयोरितिविश्वः।मूलेवकुलकेकंदःइ‸
त्यनेकार्थध्वनिमंजरी॥ ४॥ श्लोकोत्तरजानेरु‸
दाहरणांतरंद्वाभ्यामाहकुर्यादिति।निशिरात्रौ।कीदृ‸
शंसरःकासारःकथमपिवियोगिपुरुषं।उद्वेगवंतंसो
द्वेगंकुर्यादितिपृष्टे।उ॰।कोकि।कोकाश्चक्रवाकाविद्यं

रिषदि नियतं मंदसंबोधनं किं ॥ वर्णोपांत्यक सूः कुः किमसुररिपुराणां नंदगोपालये ऽस्ते कः प्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणांकमौलिः ॥ ५ ॥ कीदृक् कस्येह बंधुः सुरतमपहरंत्प्रेयसी कालयाने कीदृग्भीतिं विधत्ते धनुरवनिरुहां किं चिदामंत्रयस्व ॥

नेयस्मिंस्तत् चक्रवाकास्तु रात्रौ सरसि विप्रकृष्टास्तिष्ठंति। तेषां शब्देन वियोगिनो पि दुःखिना भवंतीति भावः। चक्रेमुखे कानिष्ठनीति। प्र॰। लाला। मुखजलस्रावः। वक्ता वाग्मी परिषदि सभायां कया निंद्यः स्यात्। प्र॰ अपवाचा। अव्यक्तभाषया नियतं निश्चितं। मंदस्य अलसस्य संबोधनं किं। प्र॰। अलस हे मंद वर्णोपांत्यं। वर्णानां कादिक्षांतानां उपांत्यं। उपसमीपे अंत्यः क्षकारे यस्य तादृशं वर्णं कं प्राहुर्बुधा इति शेषः। प्र॰ हकारं। असुररिपुराणां विष्णुनां नंदगोपालये नंदनाम्नो गोपस्यालये गृहे किं अस्तं क्षिप्तं। प्र॰ अनः शकटं। सारंगो मृगः अंकश्चिह्नं यस्य स सारंगांकश्चंद्रः। एणांको मौलौ मस्तके यस्य स एणांकमौलिश्चंद्रशेखरः कः। प्र॰। हरः शिवः। कीदृशः। प्रालेयाद्रेः हिमगिरेः पुत्री पार्वती तस्याः कुचावेव कलशौ तत्र लुठंतौ पाणी करौ यस्य सः। तुषारं तुहिनं हिमं। प्रालेयं मिहिका चेत्यमरः ॥ ५ ॥ कीदृगिति। इह संसारे कीदृग्बंधुः कस्य। प्र॰ अशोकः शोकरहितः नवभवतः इत्यर्थः। लयाने। विलासाने संश्लेषाने वा। का प्रेयसी भर्तुः सुरतं तपः।

देत्यः कंसद्विषाकः कथयविनिहतोगद्गदःकः प्रती
तःकीदृक्कीदृग्वसंतः प्रियतमभवतः प्रीतयेनि।
त्यमस्तु॥ ६॥ कोकिलालापवाचालसहृ
कारमनोहरः। अशोकस्तवकालीनमत्तालिमा।
धुरस्वनः॥ ७॥ म्लेकोत्तरजातिः। काचकेहरि।
रणाधनेक्षपरणधीः

अपहस्तहृतवती। प्र०। काली। कालीहैमवतीश्वरीत्यमरः।
त्वयोविलासेसंश्लेषसाम्येनोपेन्निकस्यचेनिविश्वः। कीदृ
कृधनुः कार्मुकंभीनिंविधनेत्रासंददाति। प्र०। नमत्नमनशी
लआकर्णमाकृष्टंसदित्यर्थः। अवनौष्टथिव्यांरोहंतीत्यव।
निरुहोवृक्षास्तेषांमध्येकंचित्एकंकमपिवृक्षं आहत्वपस्त
। प्र०। नालि। ताली वृक्षविशेषस्तस्मंवृक्षोहे नालिकंसद्विषा
विष्णुनाकीदेत्योनिहतः। प्र०। मधुः। मधुनामा। गद्गदः कः।
ख्यातः। प्र०। अस्वरः अस्फुटवाक्हे प्रियतम। कीदृक्कीदृक्
वसंतः पुष्पसमयः भवतस्तवप्रीतयेहर्षायनित्यमस्तुभ
वतु। प्र०। पुनः कोकिलेत्यादिसर्वं। कोकिलानांपिकानामा
लापेन आभाषणेनवाचालावहुगर्ह्यवाचोयेसहकाराः
अतिसोरभाम्रास्तैर्मनोहरः। पुनश्च। अशोकानांवंजुला
नांस्तवकेषुगुच्छेष्वालीनानिर्मग्नायेमत्तालयोमत्तभ्रमराः
स्तेषांमधुरस्वरोयत्रसः॥ ७ ॥ ॥
म्लेकोत्तरप्रश्नमेतत्। खंडो त्तरजानेराद्यमुदाहरणमाह
केति। हरतिस्मरणादिभिर्नवविधभक्तिभिः पापजालं।
मितिहरिस्तेनकाचक्रे। किंरुतं। प्र०। कुसुमंकोपृथिव्यांमु

कीदृग्भुजंगेस्तिकिंकीदृक्कुंभसमुद्भवस्यजठरंकी
दृग्पिपासुर्वधूः॥ श्लोकः कीदृगभीप्सितःसुकृ
तिनांकीदृङ्भोनिर्मलंक्ष्मोरागीमाहृत्वयसर्वगंकि
मुदितंराज्ञोसरः कीदृशं॥ ८ ॥ कुमुदव
नपरागरंजितांभोविहितगमागमकोकमुग्धरेखं

तहर्षः।कृपणस्यधीर्बुद्धिर्धनेकीदृशी।प्र।अवनपरा
।इ क्ष्णरोनत्परा।भुजंगेसर्पेकिमस्ति।प्र०।गरं।गरलं।कुं
भयेनेरगस्त्यस्यजठरमुदरंकीदृशं।प्र०।जितांभः जितंजीर्णी
कृतंसमुद्रशोषणेअंभःपानीयंयेननत्।पिपासुःपितृ।
गृहाद्भर्तृगृहंगंतुकामावधूस्नुषाकीदृशी।प्र०।विहितग
मा विहितंरचितंगमनंपयासा श्लोकइति।सुकृतिनांपु
रायात्मनांश्लोकः पद्यंकीदृशोऽभिलषितः।प्र०।गमकः
हृदयंगमः।पद्येयशसिचश्लोकः॥निर्मलंनभःनिरभ्र
माकाशंकीदृशं।प्र०।अकमुक्।कंजलंमुंचतीतिकमुक्
मेघः।नविद्यतेकमुक्यस्मिस्तत्।क्ष्मोरागीपृथ्वीमामंत्र
य।प्र०।धरे।हेपृथ्वि।सर्वगंआकाशेकिमुदितंकिंप्रोक्तं।
प्र०।खं।व्योम।सर्वसलिलेव्योम्निइतिविश्वः।राज्ञोसरो
वरंकीदृशं।प्र०।कुमुदेत्यादिसर्वं।कुमुदवनानांकैरववना
नांपरागैः कुसुमरजोभिःरंजितंरक्तीकृतंपदंभः पानी
यंतत्रविहितःकृतोगमागमोगमनागमनंयैस्तादृशाश्च
तेकोकाश्चक्रवाकाश्चतेषांमुग्धामनोज्ञारेखाराजीय
त्रतत्परागःकौसुमेरेणाविति॥८॥ खंजेनरजानेरुर

वंद्यः पृच्छति किं सुरारिशयनं काहंति रूपं नृणां कीदृग्वीरजनश्च कोतिगहनः संबोधयावंचितं॥ काधात्रीजगतो बृहस्पतिवधूः कीदृक्कविः क्वादृतः कोर्थैः किं भवता कृतं रिपुकुलं कीदृक्सरोवासरे॥ ९॥

वंद्य इति वंद्यः विकचोपतिः अर्थान्मुंडितः मुंडः पृच्छति। सुरारेर्विष्णोः शयनं शयनस्थानं किं। प्र० विकचवारि। हे विकच। केशहीन। वारिजलं। नृणांरूपं काहरति। प्र०। जरा वार्द्धक्यं। वीरजनः कीदृशः। प्र०। आजिससुतः। आजौ युद्धे समुत्सहर्षः। अतिगहनो दुर्ज्ञेयः कः प्र० भवः शिवः पक्षे। अतिगहनो दुस्तरः। प्र०। भवः संसारः। अवंचितं वंचनारहितं संबोधय। प्र० अच्छलित। हे अवंचित जगतो विश्वस्य धात्री उपमाता का। प्र०। भूः पृथ्वी। बृहस्पतेः सुराचार्यस्य वधूः स्त्री कीदृशी। प्र०। इपराइः कामस्तत्रतत्परा। अतिकामतत्परेत्यर्थः। कविः कुत्र आदृतः आदरयुक्तः सकाम इति यावत्। प्र० गविवाग्यां। अर्थैः कः। प्र० राः विभवः अर्थरै विभवा अपीत्यमरः। भवता त्वया रिपुकुलं वैरिवृंदं विकृतं प्र०। जितं। निर्जितं। वासरे दिवसे सरः कीदृशं। प्र०। विकचेत्यादि सर्वं। विकचानि प्रफुल्लानि च तानि वारिजानि पद्मानि तेषां राजिः पंक्तिः रसस्पाः सकाशात्समुद्भवाः समुत्पन्ना उच्छलिता ऊर्ध्वं नीताश्च ये भूरिपरागाः प्राज्यपुष्परजांसि तैर्विराजितं शोभितं॥

॥ ९॥ खंडोत्तरजातिः॥ ७॥ ७॥

विकचवारिजराजिसमुद्भवोच्छलितभूरिपराग विराजितं॥ खंडोन्नरजातिः॥ विभर्निवदनेन किंकइहसत्वपीडाकरंकुलंभवतिकीदृशंगलितयौवनंयोषितांवभारहरिरंबुधेरुपरिकांचकेन स्तुतोहतः कथयकस्त्वयानगनैर्भयंकीदृशात् ॥ १० ॥ विषमपादनिकुंजगताहितः॥ हरिर्वहतिकांनवास्यरिपुकागतांकंचकाकमर्चयति रोगवान्धनवतीपुरीकीदृशी॥ ॥

पादोन्नरजातेराद्यमुदाहरणमाह। बिभर्तीति। इह। संसारेसत्वपीडाकरंजंतुप्राणहरंकिं।प्र·। विषंगरलं। नदेववदनेनकोविभर्ति धरति।प्र·। अपान्सर्पः यो। षितांस्त्रीणांगलितंयौवनंकुलंकीदृशं।प्र· अनि।न विद्यतेइः कामोयत्रतत्॥ हरिः अंबु धेरुपरि।समुद्रस्योर्ध्वेकांवभारधृतवान्।प्र·।कुं।पृथ्वी।चपुनःसहरिःकेनस्तुतः।प्र।जगता विश्वेन।त्वयाकोहतः कथयेति पृष्टे।प्र·। अहितः।शत्रुः।कीदृशात्नगपनेर्हिंभवतःसकाशाद्भयमिति।प्र·।विषमेत्यादिसर्वं।विषमाउच्चावचायेपादाप्रत्यंतपर्वतास्तेषांनिकुंजेषुलतापिहितोदरेषुगताः प्राप्ताः अहयः सर्पायत्रस तथातस्मात्॥ १० ॥ पादोन्नरस्यापरमुदाहरणमाह।हरिरिति।हरिः कांवहति।प्र·।कुं।पृथ्वीं।नवा रिपुकास्ति।प्र·।भीः भयं।चपुनः कंप्रतिकागता।प्र·।

हरिः कमथरद्वलिप्रभृतपोधराकिंव्यधुः कयासद
सिकस्त्वयावद्जितोवुधिःकीदृशः॥ ११ ॥
कुंभीरमीनमकारागमदुर्गवारिः॥ पादोत्तरजातिः
चत्वारिराणिपादाभ्यांनेमिंपादद्वयेनच ॥

प्र।प्र।अंविष्णुंईर्लक्ष्मीः रोगयुक्तःकंपूजयति।प्र।इ
न।सूर्यं।धनयुक्तानगरीकीदृशी।प्र।अकरा।वलिरहिता।
वलिहस्तांशवःक राइत्यमरः।हरिःकंअधरत्।प्र।अगं
शैलं।वलिप्रभृतयोधार्मिकाधरांपृथ्वींकिंव्यधुःकिंदत्त
वंतः।प्र।अदुःदत्तवंतः।त्वयासदसिसभायांकयाकोजि
तः।प्र।गवावाण्या।अरिःशत्रुः।समुद्रःकीदृशः।प्र।कुं
भीरमीनमकराणांजलचराणामागमेनदुर्गस्यंवारिज
लंयस्यसः॥ ११ ॥ पादोत्तरजातिः ॥
चक्रप्रश्नस्यलक्षणमाह चत्वारीति यस्मिन्प्रश्नेपादा
भ्यांश्लोकार्धाभ्यांचत्वारिअराणिकीलानि।पादद्वयेन
श्लोकोत्तरार्द्धेननेमिंचक्रांतरक्षिराणवर्णेलिखितंतच्चक्र
प्रश्नमवेहिजानीहि।लिखनक्रमस्तुसनाभिंचक्रंलि
खित्वातन्नाभौप्रथ मात्क्षरंविन्यस्यत्रिभिरक्षरैःप्राची
लंपूरयित्वानाभिस्थमेवपंच।मात्क्षरंकृत्वात्रिभिरक्षरै
र्दक्षिणकीलंपूरयित्वानाभिस्थमेवनवमाक्षरंकृत्वात
तस्त्रिभिरक्षरैःपाश्चात्यंकीलंपूरयित्वानाभिस्थमेवत्र
योदशमक्षरंकृत्वात्रिभिरक्षरैरुत्तरकीलंपूरयित्वात
दारभ्याक्षरत्रयंनेमिचतुष्कोणेषुदक्षिणावर्तेक्रमेण।

लिखितं दक्षिणा
हिमे ॥ १२ ॥
त्रिसितिपतिरन
त्निकुत्सांसोरा
निकमलभूः काच




वर्णै चक्रप्रश्नमवे
कं चोरस्य छिन
चः किंपदं व
संवो धनं किं वद
विश्वं विभर्त्ति ॥

चक्रांगामंत्ररणं किं कथमपि सुजनः किं न कुर्य्याद
नार्य्यं भोक्तुः कीदृक्पुरं स्यात्पयसि वद कुतो मीनपं
क्तिर्विभेति ॥ १३ ॥

लिखिते सति चक्रबंधः सिद्धो भवति ॥ १२ ॥

चक्रप्रश्नस्योदाहरणं दूष्यामाह किमिति अनघः अ
पापो भूपतिश्चोरस्य किं छिनत्ति। प्र० तु नरं। करं हस्तं।अन
घो ऽपापत्हृद्घयोरिति धरणिः। किंपदं कुत्सां निंदां व
क्ति। प्र०। कु। इत्यव्ययं। कुत्सा निंदा च गर्हणा इत्यमरः। क्षो
राया: संवोधनं किं। प्र। को० हे पृथ्वि। कमलभूर्ब्रह्मा वदति
। विश्वं क। विभर्त्ति प्र० कक्रुः हे कब्रह्मन् कुः पृथ्वी० च
क्रांगस्य न्करस्यामंत्ररणं किं० प्र० अर। हे कील। सुजनः
किं अनार्य्यं असत्कृत्यं कथमपि कदापि न कुर्यात्। प्र०
। कलहं। वाग्वादं। भोक्तुः राज्ञः पुरं नगरं कीदृग्भवति।
प्र० सकरं। बलिसहितं पयसि जले मीनपंक्तिः मत्स्या
वलिः कुतः कस्माद्विभेति त्रसति। प्र०। विनः विः पा
क्षीतस्मात् सा वै विभक्ति कस्तसि: ॥ १३ ॥

किमिति। शारदं शरत्कालीनं स्वच्छं निर्मलं किं। प्र०
सरः। वृषगतिः शिवो वदति न्स्रुग्यमालीकः। प्र०। अजक:

किं स्वच्छं शारदं स्यादनिलपथगतिः कोऽम्बुमालीपवित्रः कोऽस्मिन्किं जीवनं का विरचयति कविर्वह्नि संबोधनं किं ॥ नाकोऽस्तं तिस्त्रियः कं न नु रसुररिपोः कीदृशी कश्च मूकः सम्यक्प्रीतिं तनूजा गः प्रियतम तनुते कीदृशः कीदृशास्ते ॥ १४ ॥ ॥
करंकुकोककुररकलहंसकरंवितः ॥

हे अजशिव। कः सूर्यः। अजा विष्णुहरछागा इति नानार्थः। कोब्रह्माग्न्यनिलार्केषु त्वेकाक्षरकोषः। पवित्रः कः। अमलः। अपापः। अस्मिन्लोके जीवनं किं। प्र॰। अन्। अद्भोजने। अद्यते इति अन् भोजनं। कविः का विरचयति। प्र॰। गीः वाणीः। अग्नेर्वैश्वानरस्य संवोधनं किं। प्र॰। र। हे अग्ने। रः पावके च तीक्ष्णे चेति विश्वः। नेति। स्त्रियः कं नाकांक्षन्ति। प्र॰। नीरसं। रसरहितं। निर्वीर्यं वा। शृंगारादौ रसो वीर्ये देहधात्वं वुपारद इति विश्वः। सुररिपोः विष्णोस्तनुः कीदृशी। प्र॰। सक्तमा। सक्ता संगता मा लक्ष्मीर्यस्यां सा। मूकः कः। प्र॰। अरुतः अस्वरः। ।अवागिति यावत्। अवाचि मूक इत्यमरः। हे वल्लभ कीदृशः कीदृशास्तडागस्ते तव सम्यक्प्रीतिं तनुते। विस्तारयति। प्र॰। करंकुकोके त्यादि सर्वं। करवश्च कोकाश्च कुरराश्च कलहंसाश्च करंकुकोककुररकलहंसा जलपक्षिविशेषास्तैः करंवितः खचितः। पुनः सरोजानां कमलानां कोमलो झारो यत्र नीरे तेन संसक्तो मंदी

सरोजकोमलो द्वारनीरससक्तमारुतः॥ १५॥

चक्रपद्मजातिः॥ वर्णद्वयद्वयेकैकद लभूतदलाष्टकं सर्वान्तराद्यवर्णा नपद्मस्यात्कृत कर्णिकं॥ १६॥ पुरायात्मावदकी दृशाःसरसिजैःके मोदिताःकिदृश स्त्वद्वैरीगतचक्षुषः कुलस्यभूत्कीदृक्त्वयाकेजिताः॥ ॥



भूतोमारुतःपवनोयस्मिन्सः।एतेनवायोर्स्त्रे विध्यंनि रूपितं।करंबः कवरःशारःसंपृक्तःखचितःसमाइति। हलायुधःकरंबएवकरंबितः॥ १४॥ १५ ॥

चक्रपद्मजातिःपद्मप्रश्नस्यलक्षणमाह वर्णेति। वर्णयोरक्षरयोर्द्वयेनयदेकैकंपृथक्पृथग्दलंतेन भूतंजातंदलाष्टकं।सर्वान्तराणामाद्यवर्णेनप्र थमाक्षरेणकृताकर्णिकाबीजकोषोयत्रतत्पद्म प्रश्नमिति॥ १६ ॥

पद्मप्रश्नस्योदाहरणंद्वाभ्यामाह॥पुरायात्मेति।सु कृतीकीदृशः वद।प्र। अलयः अःविष्णुस्तस्मि ल्लयोध्यानंयस्यसः। कमलैर्हर्षिताःके।प्र।अ लयःभृंगाःत्वद्वैरीकीदृशः।प्र।अपश्यत्।

अपगतेशीःशयनमःत्भोजनंचयस्यसः निद्राहाररहितइत्यर्थः।गतचक्षुषःअंधस्यकुलं कीदृक्।प्र।अपश्यत्।अनीक्षमाणमित्यर्थः।

वह्वालिःसलिलाशयःकथयभोःकीदृक् आक्षेपवाक्शब्दः कन्ननतस्करादिकभयंदत्तेभवेत्प्रापशः ॥ १७ ॥ अपित्तंगविकीदृशंनिगदितोमुक्तःपुमान्कीदृशः कस्माद्धिभ्यतिकौशिकाभुविहतः कीदृक्त्वयानस्करः॥ हस्तीस्यान्ननुकीदृशोबहुमतः

त्वयाकेजिताः।प्र०।अरयः।शत्रवः।वह्वालिः वहुसेतुः सलिलाशयोजलाधारः कीदृक्।अरयः वेगरहितः।आलिःपंक्तौचसंख्यांचसेतौचपरिकीर्तितेतिविश्वः।जलाशयाजलाधाराइत्यमरः। आक्षेपवाक्शब्दःकुत्सितनीचामंत्रणशब्दःकः।प्र०।अरेइतिरूपंकस्मिन्दत्तेसतिप्रापशोवाहुल्येनतस्करादिकभयंनभवेत्॥ प्र०।अररे।कपाटे।कपाटमररंतुल्येइत्यमरः॥ १७ ॥ अपित्तमिति।गविजले अपित्तं अग्निःकीदृशं।प्र०। अबंधः।आपोजलानिअंधांस्योदनानियस्यनत्।वडवानलइत्यर्थः।मुक्तःपुमान्कीदृशः।प्र०। अबंधःबंधरहितः।कौशिकाउलूकाःकस्माद्धिभ्यतित्रसंति।प्र०।अहस्तः।अहर्दिनंतस्मात्।विश्वामित्रेचकोराज्ञोल्लूकयोरपिकौशिकइतिविश्वः।त्वयानस्करः कीदृक्नः।प्र०।अहस्तः।अल्पः।अपश्यन्।अरयः।अररे।अबंधः।अहस्तः।अगजःअहीनः।पद्मबंधः॥प्र०।अहस्तःहस्तरहितः।बहुमतःबहुमूल्योहस्तीकीदृशः।प्र०।अगजः।शैलोत्पन्नः।रणःकीदृशःशोच्यः

न्तोऽयोरगः कीदृशः। कीदृक्सः पुरुषः परापनिहतः कीदृ
ग्भवेद्वासुकिः॥१८॥ अल्पः। अपश्यन्। अरे। अबंधः
अहस्तः। अगजः अहीनः। इति पद्मोन्नजातिः। काकस्ये
व पदं यस्य तत्काकपदं मतं॥ तिर्यगन्योन्यरेखाभिर्गो
मूत्री द्विपदीदृशे॥१९॥ कुतः कस्मात्कीदृक्
यपविषवैद्यस्फुटमिदं रिपोः कः कीदृक्सो भव
ति वशगः

काकपदम्
ना ग
द र तः | न न यः | र म णः

प्र०। अगजः गजरहितः। परेण शत्रुणा अपनिहतः।
अधन्यः पुरुषः कीदृशः। प्र०। अहीनः पूर्णबलः। वासु
किः कीदृशः। प्र०। अहीनः। अहीनां सर्पाणां मिनः स्वा
मी॥१८॥ इति पद्मबंधः॥ काकपदगो
मूत्रीजात्योरेकेन श्लोकेन लक्षणमाह॥ काकस्येति।
यस्मिन्नग्रे काकस्येव यथा काकस्य तथा यस्तंत्रिको
णं पदं भवति तत्काकपदसंज्ञं ज्ञेयं। तिर्यक् अन्योन्यमु
क्ताभी रेखाभिर्द्विपद्याः दृपेकृते गोमूत्रीजातिर्ज्ञेयेत्यर्थः
॥१९॥ काकपदजातेरुदाहरणमेकेनाह कुत
इति। हे विषवैद्यस्फुटकयमक कुतः कस्माद्व्यालः।
पुमान्कीदृग्भवति। प्र०। नागदरतः नागस्याहेर्दरतस्त्रा
सतः ना। पुमान्। अगदरतः। औषधरतो भवति दर।
स्त्रास इत्यमरः अगदो जायुरित्यपि। कः पुमान्कीदृ
शः सन् शत्रोर्वशगामी भवति। प्र०। नागतनयः ना पु
मान्। गतनयः। नीतिरहितः। चपनः कलभः कः। प्र०।
नागतनयः। नागस्य हस्तिनस्तनयः कलभ इत्यर्थः

कश्चकलभः प्रवीणः संबोध्यः सुभगवद्कैरत्नवचनो
सुरूपेतिख्यातिंजगतिमहतींकागनवती॥२७॥ नागर
रत्नः नागतनयः।नागरमणी।इतिकाकपदजातिः॥ कामा
हुयुवतीममंगलवतीकीदृग्महारांगतिः संबोध्योवतम
त्स्यवेधनधरः कीदृग्भवेत्पामरः॥

कलभः करिशावकः।प्रवीणोऽभिज्ञः संबोध्यः।
प्र· नागर।हेअभिज्ञ।रत्नवचनेको।प्र·मणीरत्नं म
णिर्द्वयोरश्मजातावित्यमरः।सुरूपेयमितिप्रसिद्धिं
कागतवती।प्र·नागरमणी·नागरस्त्री।काकपदजा
तिः॥ २७॥ नागुक्लक्षणायागोमूत्रीजातेरु
दाहरणंद्वाभ्यामाह कामिति।युवतीकामाहुः।प्र·।अ
जरां।ज रारहितां।अमंगलवतीअकल्याणयुक्ता।
कीदृक्।प्र·।अशुभाअकल्याणमहारांगतिः संबो
ध्याप्र·।त्वांहेमहद्गते।यद्वा।अमंगलवतीमहाराणां
सूर्यादीनांगतिः कीदृक्संबोध्येसेकः प्रश्नः तत्रप्र·।अ
शुभाचार।अशुभा अमंगलवतीगतिश्चारः।अशुभा
चारनस्तत्संबोधनंहेअशुभाचार प्रियालहस्सेस्याद्द
न्नोगंधापसर्पयोरितिविश्वः।बतेन्यामंत्रणे।मत्स्यवे
धनधरः पामरोनीचोजनः कीदृग्भवेत्।प्र·।बलिशी।
।बलिशंमत्स्यवेधनमित्यमरः।डलयोरैक्याद्वडिशम
पि।कीदृगिति।वल्मीकस्यापत्यंवाल्मीकिस्तस्यवेश्म
वेश्मगटहंवाल्मिकिवेश्मकीदृक्प्र·।लवि।लवनामा
सीतातनयोविद्यतेयस्मिंस्तत्।वल्मिकोपिचवाल्मी।

कीदृग्वाल्मीकिवेश्मकोऽस्त्रनसुरोधनेसुरैः।
च्यतेगीः कीदृक्कदापिकंबुरहितंवांछंतिकंयोषि
तः॥ २१॥ कीदृक्पांथकुलंतमोहरतिका
किंचक्रसंबोधनंरम्याचंपकशाखिनांकथय।
काकस्यादटजर्थेभवेत्॥ किंक्षिप्तंबलिवैरिणासु

कइतिशब्दभेदाद्वाल्मीकिरितिह्रस्वमध्योपि।अस्त
नेक्रुचरहितमुरोवक्षः कोधने।प्र०।नापुमान्।सुरैर्गी
र्वाणीकीदृगुच्यते।प्र०।उदिता।संस्कृतवाक्।उदयशी
लावा।योषितःस्त्रियः कदापिकस्मिन्नपिकालेकंबु
रहितंकंबुर्वलयस्तेनवर्जितंस्त्रीणांवलयादिराहित्यं
तुवैधव्यचिह्नंतस्मात्तेनरहितंकंनवांछंति।प्र०।भुजं
बाहुं।कंबुर्नावलयेशंखइत्यमरः॥ २१ ॥ ॥
कीदृगति।पांथानांपथिनांकुलंपान्थकुलंकीदृक्।प्र०।गमनि
गमनंगतागतंविद्यतेयस्मिंस्तत्।तमस्तिमिरंकाहर
ति०।भा।दीप्तिः।चक्रांगस्यरथांगस्यसंबोधनंकिंप्र०।सार
अरैःकीलैःसहितःसारस्तत्संबोधनंहेसार।चक्रांग।चं
पकशाखिनांचंपकद्रुमाणांरम्याका।प्र०।कलिका।कोर
कं।कोरकोस्त्रीकुड्मलेपीतिमेदिनिः।चःपुनरर्थे।आ
टजर्थेआटच्इत्यस्यार्थेकः प्रत्ययोभवेत्।प्र०।आलेच्इति
आलजाटजौवहुभाषिणीत्यालच्।किमिति।बलिवैरिणा
विष्णुनाकिंक्षिप्तं।प्र०।अनःशकटं।मुरारेराह्वाका।प्र०।अ।
अकारोवासुदेवःस्यादित्येकाक्षरः।हेवासुदेव।श्मशानेकाक्षि

रेरियोः काह्वाश्मशानेस्तिकाश्माकीदृग्भवति।
स्मपूर्वमधुनाकीदृक्पुनर्वर्त्तेते॥ २२ ॥
म्त्रजरामसुभाचारवलिशीलविनोदिनाभुजंग।
मनिभासारकलिकालजनोचिता॥ २३॥ गोमूत्री
जातिः॥ वर्णेनैकेनचद्वाभ्यांसर्वैर्वासर्वदिग्गतैः

अ ज रा म शु भा चा र व लि शी ल वि नो दि ना
भु जं ग म नि भा सा र क लि का ल ज नो चि ता

उत्तरैः सर्वतोभद्रंदुष्करंतदिदंयथा॥ २४ ॥

।प्र॰।चिता।शवशय्या।स्मापूर्वंकीदृग्भवतिस्म।
अधुनापुनः कीदृग्वर्त्तेते।प्र॰।म्त्रजरामेत्यादिसर्वं। अज
श्चरामश्च अजरामौराजानौनयोः शुभाचारेणकल्याण
चरणेनवलिराज्ञःशीलेनसौजन्येनविनोदिताप्रहर्षिता
पूर्वमासीत्। अधुनापुनः भुजंगमनिभाः सर्पवत्क्रूराअ
सारानिःसत्वायेकलिकालेजनास्तेषामुचितावर्त्तते॥
॥ २२ ॥ २३॥ गोमूत्रीजातिः॥ सर्वतोभद्र
जातेर्लक्षणमाह वर्णेनेति।यस्मिन्प्रश्नेएकेनवर्णेन
द्वाभ्यांवासर्वैस्त्रिभिर्वासर्वदिग्गतैरनुलोमप्रति लोमा
दिभिः सर्वप्रकारैःस्वैरप्युत्तरैः कृत्वादुष्करंकर्त्तुमशक्यं
सर्वतोभद्रसंज्ञंतदिदंयथाप्रवक्ष्यति॥ २४ ॥
सर्वतोभद्रजातेरुदाहरणमाह द्वाभ्यांकरतिः।यागे




कस्त्यागे धातुरुक्तस्त्ववरिपुहृदि का भूषणं के स्तनानां कोदुःखीकश्च शब्दो वदति वद शुचं कोरिपूख्यात वीर्यो॥ श्रृंगारी कीदृशः कारणशिरसि भयाद्भंगमाप्नोति सेना को दानार्थोभिधायो शिरसि शिरसि कोयुध्यते संप्रहृत्य॥ २५ ॥

कीदृक्तोयार्थिनी स्त्री भवति मदकरः प्रायशः कोदृ

धातुः कः प्र। ह्रा। ओह्राक् त्यागे। नवशत्रुहृदये का। प्र। क्षारा। चर्मभेदिका। स्तनानां भूषणं के। प्र। हाराः मुक्तावल्यः। हारो मुक्तावलीत्यमरः। दुःखीकः। प्र। हारावी हाइति रावोनादो यस्मिन्सः कः शब्दः शुचं शोकं वदति। प्र। हाइति। कोरिपूख्यातवीर्यो प्रसिद्धपराक्रमो प्र। वी। उश्च इश्च नौ वी। हरकामावित्यर्थः उकारः शंकरः प्रोक्त इति। श्रृंगारशीलः कीदृशः। प्र। हावी। हावः श्रृंगारभावजो विलासो विद्यते यस्मिन्सः। रणशिरसि रणश्रेष्ठे रणाग्रे वा का सेना भंगमेति। प्र। अवीरा। वीरहीना। दानार्थोभिधायीकः। प्र। रा। रादाने धातुः। शिरसि शिरसि प्रहरणं कृत्वा को युध्यतः युद्धं कुरुतः। प्र। अवी अवीश्च अविश्च अवी मेषो॥ २५ ॥

कीदृक्तोयेति। तोयार्थिनी स्त्री कीदृक्। प्र। अवीहा। अम्बुपानीयं षीहा स्पृहा यस्याः सा दृशा ह्येः दुःखिते। मदकरो गर्वोत्पादकः। प्र। राः विभवः। उडुपतिर्नस्

रं द्धो कस्मिन्नमंदायतेसौ निपतमुडुपतिः प्रेयसी। कामुरारेः॥ विख्यातो वाहनो कौ द्रुहिणमुरभि। दोः कीदृग्गाखेट कस्त्री कीदृक्षे. वाचिराभा। समि तिगतभयाः केगतो कश्च धातु॥ २६॥ हारावी॥
सर्वतोभद्रजातिः॥ प्रतिलोमानुलोमाभ्यामुक्तरेणगतागतं॥ मध्यवर्णविलोपेनतच्चानेकप्रकारकं २७

चेशः कस्मिन्नमंदायतेशिथिलोभवति। प्र. राहौ। ग्रहविशेषे। मुरारेः प्रेयसीका। प्र. ई लक्ष्मीः। लक्ष्मीरीकारउच्यते। द्रुहिणमुरभिदोब्रह्मविष्ण्वोर्वाहनो। कौ। प्र.। वी। विश्च विश्च वीपक्षिणौ हंसगरुडौ। आखेटको धीवरस्तस्यस्त्री कीदृशी। प्र.। वीहा विषपक्षिणः ईहास्पृहायस्याः सा। अचिराभा विद्युत्कीदृक्षे. वनभवे देवा प्र. वीरा। विगताइराजलंयस्याः सकाशात्सा। जलरहितानभवेदेवा इराभूवाक्सुराप्सुस्यादित्यमरः। समितिसंग्रामेगतभयाः निर्भयाःके प्र.। वीराः सुभटाः। गतो धातुः कः। प्र.। वी। विगतिप्रजनने॥ २६।
सर्वतोभद्रजातिः। गतागतसंज्ञकप्रश्नस्यलक्षणमाह। प्रतिलोमेति। प्रतिलोमश्च अनुलोमश्च प्रतिलोमानुलोमौ ताभ्यांकृत्वामध्यवर्णलोपेनोत्तरेणकृत्वा गतागतसंज्ञंज्ञेयं। तद्गतागतसंज्ञकमनेकप्रकारकंनानाविधंभवतीत्यर्थः प्रतिलोमानुलोमाभ्यामितिवस्तुनिर्देशार्थमुक्तं नतुक्रमप्रदर्शनार्थमिति॥ २७

वदवस्त्रमसवेऽत्रसाधुर्भवतिकीदृशः॥ गोविंदे
नाऽनसि। स्थिन्नेनंदवेश्मनिकाऽभवत्॥ २८ ॥

| गतप्रत्यागतं | | | |
|---|---|---|---|
| दी | न | र | स्री |

दीनरस्री॥ यत्नाद्न्विष्यकाग्नात्द्या।
लेखके मसिमत्रिका घनांधकारे
निःशंकंमोदतेकेनबंधकी॥ २९ ॥

| ना | लि | के | र | जा |
|---|---|---|---|---|

नारिकेरजा। असुरसुरनरेंद्रैरुत्यनेका

अस्योदाहरणंपंचभिराह॥वदेति।साधुःकीदृशोभव
ति।प्र-दीनरस्रीदीनरस्यापुत्रः।क्रमेनानसिशकटे
स्थिन्नेसतिनंदवेश्मनिनंदगोपगृहेकाऽभवत्।प्रति
लोमेनप्रत्यु-स्रीरनदी।स्रीरस्यपयसःनदीसरित् २८
गतप्रत्यागतज्ञानेरुदाहरणांतरमाह।यत्नादिति।
लेखकेरक्षरचंचुभिः यत्नादन्विष्ययत्नपूर्वकमन्वे
षणंकृत्वामसिमत्रिकाकाग्नात्द्या।प्र-नालिकेरजा
नारिकेरकाष्ठोत्पन्नालिपिंकरोऽक्षरचणोऽक्षरचंचु।
श्चलेखकेइत्यमरः।बंधकीपुंश्चली घनांधकारेनि।
विडांधकारे।यद्वा घनेमेघस्तज्जनितांधकारेनिःशं
कंशंकारहितंयथास्यात्तथाकेनमोदतेमुदिताभव।
तीति२९।प्र-जारकेलिना।जारस्योपपतेःकेलिना
क्रीडया।जारस्तूपपतिःसमावित्यमरः।द्रवकेलिपरी
हासाःक्रीडालीलाचनर्मचेत्यमरःपुंश्चलीस्याच्चबं
धकीनिमेदिनिः॥ २६ ॥ उदाहरणांतरमाह।
असुरेति।दैत्यदेवराजभिर्मस्तकेःकाउत्पनेघ्रियते।

शिरोभिरन्तनुरपि शुचिवस्त्रेकोतिविस्तारमेति। वदति कमलयोनिस्सेव्यते केनपुष्पम्मधुरमसृणमृद्वीका भवेदुत्पलस्य॥ ३० ॥ हिमांसुखण्डकुटिलोज्वलप्रभम्भवेद्गणहप्रव रस्यकीदृशम्। विहायपावर्णं पदमध्यसंस्थितंनकिंकरोत्येवजिनः करोति किं॥ ३१ ॥ दंष्ट्राभं। वसंतमासाद्यवनेषुकीदृशा पिकेनराजंतिरसालभूरुहाः ॥ ७ ॥

प्र०। मालिका। माला। शुचिवास सि शुक्लवस्त्रेतनुरपि अल्पोपिकः अतिविस्तारमाप्नोति। प्र०। कालिमा। कज्जलं। कमलयोनिर्ब्रह्मावदति। पुष्पंकेनसेव्यते। प्र०। कहेवब्रह्मन्। अलिनाभृंगेन। उत्पलस्यपद्मस्यमधुर ॥ मसृणमृद्वी। मधुराचमसृणास्निग्धाचमृद्वीचकोमलाचकाभवेत्। प्र०। नालिकामृणालदंडः मसृणोऽकर्कशेस्निग्धइतिमेदिनिः॥ ३० ॥ ७ ॥
उदाहरणांतरमाह। हिमांश्विति। कुटिलोज्वलप्रभं। हिमांशुखंडंचंद्रशकलंवराहश्रेष्ठस्यकीदृशंभवेत्। प्र०। दंष्ट्राभं। दंतकांतं। पदमध्यसंस्थितंवर्णंविहायहित्वाजिनः सुगतः किंनकरोत्येव। प्र०। दंभंकपटंनकरोतिभंदंभद्रंकरोत्येव। भंदंभद्रंशिवंतथेतित्रिकांडशेषः॥ ३१ ॥ उदाहरणांतरमाह। वसंतमिति। वसंतकालमासाद्यकीदृशेनपिकेनकोकिलेनरसालभूरुहश्चूतवृक्षाराजंतिदीप्यंते। राजृदीप्तौ। प्र०। कांतगिरा

निरस्यवर्णाद्वयमत्रमध्यमंतवद्विषांकास्यतमातिथिश्चका॥ ३२॥ कांतगिरा॥ गतप्रत्यागतजातिः

| | ना | |
|---|---|---|
| मा | लि | का |
| | का | |

आदौमध्येतथांतेवावद्धंनेवर्णजानपः॥ सकद्विश्चादयोयत्रवर्द्धमानाक्षरंहितत्॥ ३३॥ किमनंतनयारव्यातंपादेनव्यंगमाहुवपः॥ जनानांलोचनानंदंकेतन्वंतिद्युनात्यये॥ ३४॥ खंजनाः॥ उरःस्थलंकोत्रविनापयोधरंविभर्त्तिसंबोधयमारुताशनं॥ वदंतिकंपन्ननसंभवंजनाःफलंचकिंगौडवधूकुचोपमं॥ ३५॥ नागरङ्गम्

कल्खेण अस्मिन्नुत्तरेमध्यमंवर्णाद्वयंनिरस्यतवद्विषांशत्रूणांका। प्र॰। कारा। वंधनगृहं। अंत्यतमा। तिथीनामं। तिमातिथिःका। प्र॰। राका। पौर्णमासी। पूर्णेराकानिशाकरेइत्यमरः॥ ३२॥ गतप्रत्यागतजातिः॥ वर्द्धमानाक्षरजातेर्लक्षणमाह आदाविति सुगमं॥ ३३॥ वर्द्धमानाक्षरस्योदाहरणमाह षड्भिः। किमिति अनंतस्यभावोऽनंतता तयाकिंख्यातं। प्र॰। खं। आकाशं। पादेनचरणेनव्यंगंहीनं आह्वपाप्र॰। खंज॰। द्युनात्ययेमेघापगमेपुंसांदृष्टिसुखंकेतन्वंति। प्र॰ खंजनाः पक्षिविशेषाः॥ ३४॥ उदाहरणं तरमाह उरइतिपयोधरंविनाउरःस्थलंकोविभर्ति। प्र॰। नापुमान्। मारुताशनंसर्प्पंसंबोधय। प्र॰। नागपन्ननसंभवंनगरोत्पन्नंजनाः कंवदंति। प्र॰। नागर। गौडवधूकुचयोरुपमायस्मिंस्तादृशंफलंकिं। प्र॰। नागरं

॥ * प्रायेणात्रचलोकस्यकःकरोतीहगर्ववेतां ॥ आदौवर्णद्वयंदत्वाब्रूहिकेवनवासिनः ॥ ३६ ॥ शवराः ॥ सानुजःकाननंगत्वानैकषेयान्जघानकः ॥ मध्येवर्णत्रयंदत्त्वारावणःकीदृशोवद ॥ ३७ ॥ राक्षसोत्तमः ॥ धत्तेवियोगिनीगंडस्थलपांडुफलानिका ॥ वदवर्णौविधायांतेशीताद्दृष्टाकयाभवत् ॥ ३८ ॥ लवलीलया ॥ विष्णोःकावक्षभाग्देवी लोकत्रितयपावनी ॥ वर्णमाद्यंतयोर्दत्वाकःशब्दस्तुल्यवाग्वद ३९ समानः ।

अपरमाह प्रायेणेति इह लोके नीचलोकस्यगर्वत्वंकः करोति । प्र० । रा अर्थः । तदादौवर्णद्वये दत्ते वनवासिनः के भवंति । प्र० । शवराः । किराताः ॥ ३६ ॥ अपरमाह । सानुजः सबंधुः काननंगत्वानैकषेयान्राक्षसान् को । जघानहतवान् । प्र० । रामः । रघुनाथः कर्बुरो निकषा । त्मजइत्यमरः । तन्मध्येवर्णत्रयंनिक्षिप्यरावणः किदृशः । प्र० । राक्षसोत्तमः राक्षसश्रेष्ठः ॥ ३७ ॥ अन्यदाह । धत्तइति । वियोगिनीगंडस्थलवत्पांडुफलानिका । धत्ते । प्र० । लवली । इंदुवारुणीलतालवलीमंजरीमते तिधनंजयकोषः । तदंतेवर्णद्वयंदत्वासीताकयादृष्टा ऽभवत् । प्र० । लवलीलयालवनाम्न पुत्रस्यलीलया ३८ विष्णोरिति । विष्णोर्मुरारेर्वक्षभाका । प्र० । मा लक्ष्मीः । तदाद्यंतयोरेकैकंवर्णंदत्वातुल्य वाचीशब्दः कः प्र० । समानः तुल्यइत्यर्थः ॥ ३९ ॥ ॥

हीयमानाक्षरजातिः ॥ ४५ ॥ ः ॥
अन्योन्याक्षरवर्तिन्या चैकांतरितयाथवा ॥ शृंख
लाबंधइत्युक्तो ग्रंथिमान्नागपाशकः ॥ ४६ ॥
पवित्रमतितृप्तिकृत्किमिह किं भटामंत्रणं ॥ ब्रवीतिध
रणीधरस्तु किमजीर्णसंबोधनं ॥ हरिर्वदति कोजितो

हीयमानाक्षरजातिः ॥ ॥ शृंखलाजातेर्लक्षण
माह अन्योन्येति। यत्रान्योन्याक्षरवर्तिन्या। अन्यो
न्यकोर्थः। प्रथमवर्णस्य द्वितीयेन। द्वितीयस्य तृतीये
न। तृतीयस्य चतुर्थेन। एवंरीत्या कोष्ठसंबंधः साजा
तिः शृंखलेति। अथवा एकांतरितया। कोर्थः प्रथ
मस्य तृतीयेन द्वितीयस्य चतुर्थेन। तृतीयस्य पंचमेन
वर्णेन संबंधः सैकांतरितशृंखला। ग्रंथिमान्ग्रंथि
युक्तो वर्णसंबंधो नागपाशाख्यो ज्ञेयः ॥ ॥ ४६ ॥
तत्र शृंखलाजातेरुदाहरणमाह द्वाभ्यां। पवित्र
मिति। इह लोके अतितृप्तिकृत्पवित्रं किं। प्र०। पयः
क्षीरं। भटस्य योधस्यामंत्रणं किं। प्र०। योध। हे सुभट
। धरणीधरः शैलो ब्रवीति अजीर्णसंबोधनं किं। प्र०
। धर हे शैल रसेत्यजीर्णसंबोधनं। व्याधयो रसमू
लास्तु रितिनिदानं। अहार्यधरपर्वताइत्यमरः। ह
रिर्वदति मदनवैरिणा शिवेन कोजितः। प्र०। समहे
सलक्ष्मीक। मयः मयनामासुरः। ननु निश्चितं शि
खंडि कुलस्य मयूरसंघस्य पतीनां रवं नटनं तत्रारं

मदनवैरिणासंयुगेतनोतिनन्नुकः शिखंडिकुलतांडवाडंबरम्॥ ४७ ॥ पयोधरसमयः॥
भवतिजयिनीकाजोसेनाहृदपाधरभूषणांवहृतिकिमहिः पुष्पंकीदृक्कुसुंभसमुद्भवं॥ महतिसमरेवैरीविरत्वयावदकिंहतः कमलमुकुलेभृंगः कीदृक्पिबन्मधुराजते॥ ४८॥ परागरंजितः

बरंतूर्यरवंकस्तनोतिविस्तारयति। प्र०। पयोधरसमयः पयोधरामेघास्तेषांसमयः वर्षाकालइत्यर्थः। तांडवंनटनंनाट्यमित्यमरः। आडंबरस्तूर्यरवइतिमेदिनिः॥ ४७ ॥ भवतीति। आजोसमरेका। सेनाजयिनीजयशीलाभवति। प्र०। परा। उत्कृष्टः अधरभूषणं ओष्ठालंकारमाहृदपा प्र०। राग। हेलोहित। रागोनुरक्तौमात्सर्येक्लेशादौलोहितादिष्विति विश्वः। अहिः सर्प्पः किंबहति। प्र०। गरं। विषं। क्ष्वेडस्तुगरलंविषमित्यमरः। कुसुंभसमुद्भवंमहारजनंपुष्पंकीदृक्। प्र० रंजनशीलं। रंजिरागे। रंज्यतेनेनेति। कुसुंभंहेमनि। महारजनेचकमंडलाविति मेदिनिः हेवीर। महतिपुद्धेत्वयाशत्रुः किंहतः। प्र०। जितः। कमलस्यमुकुलेकुड्मलेभृंगः मधुपुष्परसंपिबन्लिहन्कीदृक्राजतेदीप्यते। प्र०। परागरंजितः परागैःकुसुमरेणुभिः रंजितः अनुलिप्तः। परागः कौसुमेरेणावित्यमरः॥ ४८ ॥ शृंखलाजातिः। एकांनरितशृंखलाजा

इतिशृङ्खलाजातिः। आह्वानंकिंभवति। हितरोः कस्यचित्प्रश्नविज्ञाः प्रायः कार्यंकिम पिनकुर्वतेकेपरेषाम्। पूर्णेन्दुंवहतिनच काष्टच्छतिम्लानचक्षुः केनोदन्याजनितमसमं कष्टमाप्नोतिलोकः ॥ ४९ ॥ नीरापकारेण। का सम्बुद्धिस्सुभटभवतोब्रूहिष्टच्छामिसम्यक्प्रातः कीदृग्भवतिविपिनंसम्प्रबुद्धै र्विहङ्गैः। लोकः।

निरुदाहरणमाह आह्वानमिति। कस्यचिन्नरोः अनिर्दिष्टस्यभूरुहस्याह्वानंकिंप्र०। नीप। हेकदंब। प्रायःपरेषामन्येषांकार्यंकेनकुर्वंतेनकुर्वंति। प्र०। परेशत्रवः। पूर्णांचंद्रंकावहति। प्र०। राका। पौर्णमासी। म्लानचक्षुः एच्छति। लोकः उदन्याजनितंपिपासोत्पन्नं। असमंविषमंकष्टंकेनप्राप्नोति। प्र०। कारण। हेम्लानदृष्टे नीरापकारेण। नीरंजलंतस्यापकारेण। उदन्यातुपिपासात्तर्षइत्यमरः ॥ ४९ ॥ उदाहरणांतरमाहकेति। हेसुभट। भवतस्तवसंबुद्धिः का। प्र०। वीर। हेसुभट। प्रातःसंबुद्धैर्विहंगैः सुप्तोत्थितैःपक्षिभिर्वनंकीदृग्भवति। प्र०। रवि। रवोध्वनिर्विद्यतेयस्मिंस्तत्सशब्दमित्यर्थः। लोकोमुदंहर्षंकस्मिन्प्रथयतिविस्तारयति। प्र०। हासे। हास्ये। त्वदीयाजेत्रीजयशीलाका। प्र०। सेना। चमूः। इहलोकेप्रायःकीदृशेनजंतुनाशरीरिणासुखंस्थितं। सुखस्थीयतइत्यर्थः। प्र०। वीहारसिविना। ॥ ॥ ॥

कस्मिन्प्रथयतिमुदंकान्त्वदीयाचजैत्रीप्रायोलो
केस्थितमिहसुखजन्तुनाकीदृशेन॥ ५० ॥
वीहारसेविना। इत्येकान्तरितशृङ्खलाजातिः।
गोष्ठीविदग्धजनवत्यपिशोचनीयाकीदृग्भवेन्नर
रोरश्मिषुकासदास्ति। दुर्वारदर्पदलितामरनाय
कापिकीदृश्यकारिसुरशत्रुचमूग्रहेन ॥ ५१ ॥
तारकविरहिता। की नाग पाश दृक्परैरुपहतोभ
वतिक्षितीशः इच्छ वि र हि त्यनुज्वइहकिं।
क ना

वीरंबोद्धापतनंसेवतइतिवीहारसेवीतेन॥ ५० ॥
एकांतरितशृंखलाजातिः। इदानींनागपाशजातेरु
दाहरणमाह गोष्ठीतिवि दग्धजनवत्यपिचतुरजनयु
क्तापिगोष्ठीसभा।संलापोवा- कीदृक्शोचनीया अश्ला
ध्याकीदृग्भवेत्।प्र-।कविरहिता।कवीश्वरेणहीना।गो
ष्ठीसभायांसंलापइतिविश्वः नररोरश्मिषुसूर्यकिरणेषु
सदाकास्ति।प्र-।करता।कराणांकिरणानांसमूहः कर
तागुहेनषाण्मातुरेणसुरशत्रुचमूः दैत्यसेनाकीदृशी।
अकारि।कृता।प्र-।तारकविरहिता। तारकासुरेणविर
हिताहीनाकृता। कीदृशीचमूःदुःखेनवार्यतइतिदुर्वा
रः दुर्वारदर्पेणदलितोद्विधाकृतः अमराणांनायकः
पुरंदरोयया सा। अपीत्यवधारणे॥ ५१ ॥
अपरमाहकीदृगितिकीदृशः क्षितीशोनृपः परैः शत्रु
भिरुपहतोनिर्जितोभवति।प्र-।गतनयः नीतिरहितः।

विदितम्पवित्रम्। विच्छिन्नपाणिचरणोजन
कोपदीयः कीदृक्परैरभिहितस्सपुमान्पुन ।
स्यात्॥५२॥व्यङ्गतनयः। इतिनागपाशजातिः
।भाषाभिश्चित्रितयत्स्यात्संस्कृतप्राकृ
तादिभिः। सन्तश्चित्रन्तदिच्छन्तिसंसुहृन्त्वेकभा
षया॥ ५३ ॥ किन्नस्यात्कीदृस्सम्महतोपिचता
दृशस्यजलराशेः। दिनकरकिरणध्वंसरागपडि

अनुष्ठुः खर्वः छन्ति इह लोके विदितं विख्यातं पवित्रं।
किं। प्र०। व्यंग-गव्यं। हे असंपूर्णांग। गोमूत्रादि। यदीयो
जनकः यस्यपिता विच्छिन्नपाणिचरणो निकृत्तहस्त
पादोभवति सपुमान्पुनः परैः शत्रुभिः कीदृगभिहितः
उपहसितः स्यात्। प्र० व्यंगतनयः। व्यंगस्यहस्तपादा
दिहीनस्यतनयः पुत्रोयमिति॥ ५२ ॥ ॥
नागपाशजातिः। चित्रसंसुहृज्जात्योर्लक्षणमाह भा
षाभिरिति। यन्नृम्णंसंस्कृतप्राकृतादिभिर्भाषाभिःसं।
स्कृतभाषयाप्राकृतभाषयाचचित्रितंसंदृष्टंस्यात्तत्सं
तश्चित्रंचित्रसंज्ञकंकथयंति आदिनापैशाचीमागधी
लौकिकादिग्रहः। तुपुनः। एकयाभाषयाउक्तंयत्तत्सं
सुहृत्संज्ञंवांछंति॥ ५३ ॥ तत्रसंस्कृतप्रा।
कृतजातिंप्रदर्शयन्नाह किमिति। तादृशस्यविख्या।
तकीर्तेर्महतोमहात्मनोजलराशेः उदधेः किंवस्तुकीदृ
शंनस्यात्। प्र० कमलवणं। कंजलं। अलवणमक्षारंच।

उट्ठहोइकिंगोसे ॥ ५४ ॥ कमलवणं। मत्स्यहितमम्बुकीदृक्पृच्छतिरोगी निशासु किम्भातिकोऽनङ्गोवदतिमृगःखेगम्यइकेरिसारङ्गणं ॥ ५५ ॥ अविसामभमिरेणं। इतिसंस्कृतप्राकृतजातिः ॥

स्यादेव। संस्कृतमुक्त्वा उत्तराद्धेणप्राकृतभाष० यावदिति। दिणअरकिरणपंसरणं। दिनकरणस्पर्शेनपडिउं उट्ठइतिबुद्धं। होई। भवतिकिंगोसेकिंप्रभातेप्र० कमलवणंकमलवनं॥ ५४ ॥ उदाहरणांतरमाह। मत्स्येति। मत्स्यानांहितंअंबुजलंकीदृशं प्र० अवि। नविद्यतेवयः पक्षिणायत्रतत्। रोगोस्यास्तीनिरोगी पृच्छति। निशासुरात्रिषुकिंभाति। प्र०। सामसं। अमोरोगस्तेनसहितः सामसत्संबुद्धौ। सामहेरोग। मंनक्षत्रं। अमोरोगस्तद्विशेषेइतिविश्वः। अनंगःक०। प्र०। इः कामः मृगोवदतिखे। आकाशेगम्मइ। गम्यते। केरिसा। कीदृशा। रइणं। रविणा। प्र०। एणा। हे मृग। अविसामभमिरेणं। अविश्रांतभ्रमणशीलेन। विश्रामरहितंयद्भ्रमणंतच्छीलेनेत्यर्थः। एणोमृगविशेषः। एणःकुरंगमोरिष्यः ॥ स्याहृष्यश्चाहलोचनइतित्रिकां। डशेषः। अनंतंसुखनभंखमित्यमरः। संस्कृतजातिः ॥ ॥ ५५ ॥ संस्कृतापभ्रंशजातेरुदाहरणमाह। भायइति। दंतप्रहीणअदंतागजाः कीदृशाद्वेरिगजान्प्रायेदिभ्यंतित्रसंति। प्र०। सरक्षान्। रदोदंतस्तेनसहवर्त्तमानान्

प्रायोविभ्यतिकीदृशाद्रिगजाद्‌ न्नप्रहेरणागजाः
पृथ्वीसम्प्रतिकीदृशीनृपतिनाराजन्वतीराजते।
प्रायः प्रावृषिकीदृशीगिरितटीधत्तेचकः कञ्जले
मज्जत्सेवलियेघ्नराज्ञयदिरोजातंसरोकेरिसम्॥
॥ ५६ ॥ सरदादवताविदवाहिरम्। छिन्नेकीदृ
शमङ्गं नकभवंकंवदन्तिविद्वांसः। ॥

कीदृशानृपतिनापृथ्वीराजन्वतीराजते। प्र॰। अवता। अ
वनंरक्षणंकरोतीत्यवन्तेनअवता। सुराज्ञिदेशेराजन्व
नित्यमरः। प्रावृषिवर्षाकालेगिरितटीशैलभूमिः कीदृ
शी। प्र॰। विदवा। व नाग्निरहिता। जलेकः कंधत्ते। प्र॰। अ
हिः अर्थाच्छेषः अं। विष्णुं। मज्जरणेवलिरणमध्याह्नवे
लायां। घरणव्रयदिरो। घनात्ययदिनेमेघा पगमे। जातं
। जातंसरः केरिसंकीदृशं। प्र॰। सरदादवताविदवा हिरं
। शरदातपताविदवाह्यं। शरत्कालीनतापेनतापितंवा
ह्यंबहिः प्रदेशोयस्यतत्‌॥ ५६ ॥
उदाहरणांतरमाह छिन्नमिति। छिन्नंछिन्नं अंगंकीदृशं।
प्र॰। विस्रंदुर्गंधि। विस्रंस्यादामगंधियदित्यमरः। इतंभ
वंदंतस्पर्शजंकंवर्णंवदंति। प्र॰। तांतकारं। तनुलसा
नांदंताइति। अतिलघुवाचि अतिसूक्ष्मवाचिपदं।
किं। प्र॰। अणुलवलेशकणाणवइत्यमरः। केरि
सु। कीदृशः सुअणेसु। सुजनेषु। होईजणेभवतिज
नः। प्र॰। विस्रंतमणं। विश्रांतमनाः। विश्रांतंसुखितं।

अतिलचुवाचिपदंकिंकेरिसुःसुअरोसुहोइ
जणो॥ ५७॥ विस्रन्तमणु॥इतिसंस्कृता
पभ्रंशजातिः।किंसुखमाहुःप्रायःकेशविका
रञ्चकाहरेर्दपिताकथमाभाकस्मिन्निशिकोलु
च्चइवीरपुत्तिसाराणम्। ॥ ५८॥ शमल
कम्मात्लम्भे।कस्तंवेरमसुतइतिविख्यातःप्र
च्छतिस्फुटंहरिणः।अहिणवणअलोणोअ
साहूणोकेणउज्झलइ ५९

मनोपस्पसः।दर्शनादेवसाधवइतिस्मृतेः॥ ५७॥
संस्कृतापभ्रंशजातिः॥संस्कृतमागधिकजातेरुदाह
रणं माहकिमिति।प्रायःसुखंकिमाहुः।प्र।शंशिवं।शं
शिवेश्रेयसिप्रोक्तमित्येकाक्षरः।केशविकारंचकिमाहुः।प्र
।अलकं अलकाश्चूर्णकुंतलाइत्यमरः।हरेर्दपिता।
का।प्र।मा।लक्ष्मीः।निशिरात्रौकथमाभाकीदृग्दीप्तिः।
कस्मिन्।प्र।अलंपर्य्याप्ते।भे।नक्षत्रे आभा।भारुग्रु।
चिर्दित्वयइतितारामिधानः।अलंभूषणपर्याप्तिशक्ति
वारणवाचकमित्यमरः।कोलुच्चइ कोरोचते।वीरपु
त्तिसारं।वीरपुरुषाणां।प्र।शमलकस्माल्लंभे।समरक
र्मारंभःयुद्धक्रियारंभइत्यर्थः॥ ५८॥ ०।
कइति।स्तंबेरमसुतकरिशावकः कः।प्र।कलभः।इ
भःस्तंबेरमःपद्मीत्यमरः।हरिणःस्फुटंप्रच्छति।अभि
नवनगरीराज्ञःअसाधोःकेनउज्जटाभवति।प्र।
स्तण।हेहरिण।कमसणाकरभयेनकरोबलिस्तदुये

कलभराणा। इतिसंस्कृतमागधिकम्। कोपारुणांकिमरुणाग्नसरस्यपूर्वकाष्ठाग्रनिष्ठितत। नोरूपमानपात्रम्। पत्नंखरोणामरणासच्चरस्स रणम्पुत्तेहिकिम्पविसिउणतुरंगमत्यम् ॥ ६०
कपिलपराणम्। कम्प्रीणयन्तिजलदासेन्यं। कीदृक्पलायतेसमरात्। धत्तेशिरोधरा किंरु इसि रंकेरिसम्भोदि॥ ६१॥ चातकंकातरंकम्

संस्कृतमागधिकम्॥ संस्कृतपैशाचिकजातेरुदाहरणमाह द्वाभ्यांकोपारुणमिति॥ पूर्वकाष्ठाग्नेपूर्वदिगग्रेनिष्ठितातनुर्यस्य अरुणाग्नसरस्यानूरुसारथेरर्कस्यकोपारुणासुपमानपात्रंकिं। प्र- कपिलपरंणा। वानरमुखं। प्राप्तंस्परणोनमरणासगरस्यारणायपुत्रैः किंप्रविश्यतुरंगमार्थे तुरंगमार्थंसगरस्यपुत्रैः किमरणायंप्राप्यक्षरोनमरणंप्राप्तमित्यन्वयः। प्र- कपिलपरां। कपिलस्यमुनेर्वनमित्यर्थः॥ ६०॥
किमितिजलदाः कंप्रीणयंति। प्र-। चातकंपक्षिविशेषं। कीदृशंसैन्यंसमरात्पलायते। प्र-। कातरं। भीरु। शिरोधराः किंधत्ते। प्र- कं। शिरः। सुखशीर्षजलेषुकंरुइसिरंकेरिसंभोदि। रुइशिरःकीदृशंभवति। प्र-। चातकंकातरंकं। जातगंगातरंगंजातागुत्पन्नागंगायास्तरंगायस्मिंस्तत्॥ ६१ ॥ ॥
संस्कृतपैशाचिकं संस्कृतसौकिकस्योदाहरणमाह

इतिसंस्कृतपैशाचिकम्। कोवर्णाद्यः कश्चजल
धिसुताकश्चदीर्घादिसज्ज्ञम्। प्राहुर्बुद्धः कमज
यदसौतार्किकैः केक्रियन्ते। आमन्त्र्योविः कथ
यविदितंकिंस्यदहेतुवाचिजाणाबेडंमहइम
हिलासाविवोल्लेइकीसे॥ ६२॥ ७ ॥
अएचम्मारंवादावेहि। शब्दः कः स्यात्परुषवच
नेकुराडलोकोस्मरारेः काममभ्योधेर्हरिरुदहरद्धी

कइति। वर्णाद्यः अकारादिसकारांतानांवर्णाना॥
माद्यः कः। प्र॰ अः अकारः। जलधिसुतालक्ष्मीः
कः। प्र॰ शा। अः विष्णुस्तस्मिन्। दीर्घादिसंज्ञंवर्णकं
प्राहुः॥ प्र॰। एवंचा। ओंङ्ऐ औ च एतदात्मकं। असौ
बुद्धोजिनः कमजयत्। प्र॰। मारं। मदनं। मारजिल्लोक।
जिज्जिनइत्यमरः। तार्किकैस्तर्कशास्त्रज्ञैः केक्रियं
ते। प्र॰। वादाः। विवादाः। विः पक्षी। आमंत्र्यः संबोध्यः
। प्र॰। वे। हेपक्षिन्। विदितंप्रसिद्धंहेतुवाचिपदंकिंक।
थय। प्रहि। हिहेतावबधारणेइत्यमरः। जाणाबे ।
डंमहमहइमहिलायानृत्यंकर्तुंवांछतिमहिला। सा
वि। वोल्लेइकीस। सापिवदतिकिं। यामहिलास्त्रीन।
र्तितुमिच्छतिसाकिंवदतीत्यन्वयः। प्रत्युत्तं॰ अरे च।
म्मारंवादावेहि। अयेचर्मकारावादयध्वंवादित्रमि
तिशेषः॥ ६२ ॥ अस्यैवोदाहरणांतरमाह
शब्दइति। परुषवचनंकर्कशवाचीशब्दः कः। प्र॰। न

वधः पृच्छतीदम्॥ हंडीकुंडी अणासि णाघरे कीस। अम्हार अत्थ ये पुच्छि त्था सउणा परिहारुत्तरं कीसदेइ॥ ६३॥ नाहीकुम्भारा इति संस्कृत लौकिकम्। इति चित्रजातिः। को निवसइ सच्छं सुन्दरि गिरिगहकुज्जमज्झम्मि। सह अज्जुणेण। योद्धुं सिहिगमणो केरिसो होइ॥ ६४॥ ७॥

इत्यन्वयं। स्मरारेः शंकरस्य कुंडली कोऽपि अहीसर्पो। हरिरंभोधेः समुद्रात्कामुदहरत् उद्धृतवान् प्र॰ कुंएश्री। वीवधो भारः पृच्छति। वीवधो विवधश्चापि पर्योहारे च भारयोरिति मेदिनिः। किं पृच्छतीत्याह– हंडीकुंडी अणासि णाघरे। कीस॰ अम्हार अस्य॰ हंडीकुंडी पात्राणि आनयसि न गृहे कथमस्मदर्थे। ते पुच्छि त्था। स॰ उणापरिरुत्तरं॰ कीसदेइ॰ यः पृच्छते स पुनः परिहारोत्तरं कीदृग्ददाति॰ प्र॰ भारहे वीवधः नाहीकुंभार॰ नास्ति कुंभकारः॥ ६३॥ संस्कृत लौकिकप्रश्नचित्रजातिः शुद्धप्राकृतस्योदाहरणमाह द्वाभ्यां कइति॰ को निवसति। प्र॰ सरभससवराहवग्गो॥ शरभाश्च शशाश्च वराहाश्च सरभशशवराहास्तेषां वर्गः समूहः। सह अर्ज्जुनेन योद्धुं शिखिगमनः कार्त्तिकेयः कीदृशो भवति॰ प॰ सरभससवराहवग्गो। सरभसशबराहवाग्रः रभसेन हठेन क्रोधेन वा सहिताः सरभसाः ये शबराः किरातास्तेषामाहवे संग्रामे अग्रो मुख्यः।

सरहसरवरहुवगो॥काहुरइमणम्पइणोगुणगणा॥
जोवणसल्लाहणिग्गस्स। कच्छ्रचडचडेतिसद्दा
हुअआसनाकेरिसाहोन्ति॥ ६५ ॥ सरिसव
हुअस्या। इतिषड्वप्राकृतम्। पाणिग्गहणणिवत्र
सणसोहइकेहिंमण्डिअम्। साहसुवहुवरप
इणोरिउवलंकेहिंरवण्डिअम् ॥ ६६ ॥

द्वितीयोदाहरणमाह। केतिकाहरइमणंपइणो।
काहरतिमनःपत्युः। गुणगणजोवणसल्लाहणि
ग्गस्स। गुणगणयौवनश्लाघनीयस्य। गुणगणेन
यौवनेनचश्लाघनीयस्यपूजनीयस्यपत्युर्मनःकाह
रति। प्र॰सरिसबहुल्ला। सदृशवधूकासमानगुणशी
लेत्यर्थः। सरसवहुल्लाइतिपाठेतुसरवधूका-शृंगा
ररससंपन्नावधूकेत्यर्थः। कअचडचडेतिसद्दाकृत
चटचटेतिशब्दाःहुआसणकेरिसाहोंति। हुताशना
कीदृशाभवंतिप्र॰सरिसअहुअस्या। सर्षपहुताः। सर्षपः
सिद्धार्थस्तद्धोमेनाग्निश्चटचटेतिशब्दंकरोति ॥ ६५॥
षु॰ड्वप्राकृतंशुद्धापभ्रंशस्योदाहरणद्वयंद्वाभ्यामाह।
पाणिग्गहणनिवसनंशोभनेकैर्मंडितं। विवाहस्यव
स्त्रंकैर्मंडितंशोभते। प्र॰समरंगणोहिं। समरंजनैः। तु
त्यङ्कुसुंभादिरंजनद्रव्यैरित्यर्थः। साधय॰वहुवीरपत्युः
रिपुवलंकैःखंडितं। साधयेतिकथयेत्यर्थे। बहुवीर।
स्वामिनोराज्ञःशत्रुसैन्यकैश्छिन्नं। प्र॰समरंगणोहिं। सं

विराधमु॰॥३३॥

समरङ्ग. गोहिम् । रसिन्महकेराउच्चाडराकिज्ज
इ जुन्मइभारासुकेराउ विजइ । निसिन्मस्रो
न्मरवण केरासुहिगाइ राहपहसमसुन्मरोगि
ग्धइ ॥ ६७ ॥ गीरसरासरा । इतिशुद्धापभ्रंश
म । सुन्मलोमेहंपुच्छइपुच्छइमेहोवितन्तहा
सुन्मलम् ॥ केणहन्मासन्मलसुन्माकेराजणो
विसइपान्मालम् ॥ ६८ ॥ ७ ॥

रसिकानांसरसानांकेनउच्चाटनंक्रियते । प्र॰ गीरसरा
सरा । नीरसरागेरा । नीरसोमाधुर्य्यरहितोरागोगानवि
शेषोयस्यसतथातेन । युवतीनांमनः केनउद्विग्नउ
द्वेगीक्रियते । प्र॰ गीरसरासरा । नीरसरागेरा । निर्गो
तोरसरागोयस्मात्सतथातेन । तृषितोलोकः सरा
केनस्वस्थीक्रियते । प्र॰ गीरसरासरा । नीरसरावेरा
। नीरस्यजलस्यसरावः पात्रविशेषस्तेन । अयंप्र
श्नोममभुवनेगीयते ॥ ६७ ॥ शुद्धापभ्रंशं ॥
शुद्धमागधिकस्योदाहरणाद्वयंद्वाभ्यामाह । सुन्मलो
मेहंपुच्छइ॰ सूकरोमेघं एच्छति॰ किंएच्छतीत्याह । अ
सन्मलसुआ । केनहताः सगरसुताः प्र॰ बलाहकबि
लेन । हेवराह॰ कपिलेनमुनिना । पुच्छइमेहोविन्नात
हासुअलं । एच्छतिमेघोपि । तंतथासूकरं । किंएच्छ
तीत्याहकेराजणोविसइ । पान्मालं । केनजनोविश
तिपाताल । प्र॰ बलाहकबिलेरोविवरेरा ॥ ६८ ॥

वलाहकविलेन। धवलुज्जलेहिंकेहिंसोहइ धरणीमसाणदेसस्स। णिलकअस्सरकवनाल केहिंपलिवेढिआहोन्ति॥ ६९॥ णालका। लकेहिम्। इतिशुद्धमागधिकम्। वेरीपुच्छइक करोरोचइकसणोद्दणोकेहिम्। सच्चाइणाके। हिंसमत्थ। न्तिसच्चणिहितंकताइम्पि॥ ७०॥ अहितपकवेहिम्। पन्नूणकिम्मड अरोणि

धवलोज्वलेः कैः शोभते धरणीश्मशानदेशस्य प्र· णालकलकेहिं। नरकरंकेः नरकरंकेरस्थिभिः। करंकोमस्तकेसस्यनारिकेरफलास्थिनीतिमेदिनिः। निरयस्यनरकस्यरक्षकाः कैः प्रतिवेष्टिता भवंति। प्र· णालकलंकेहिं। नरकस्यारंकाः कृपणाः नरकरंकाः। स्तेः। रंकस्तुकृपणोमन्दइतिविश्वः॥ ६९॥

शुद्धमागधिकं॥ शुद्धपैशाचिकस्योदाहरणाह्वयंहृष्यामाह। वैरीतिशत्रुः पृच्छति। गगने आकाशेरोचते दीप्यतेकश्मोघ नश्यासोमेघः कैः। प्र· अहितपकवेहिं। अहितवकैः। हे अहितशत्रो। बकैः। पक्षिविशेषैः। सच्चाइणाकेहिंसमस्यति। सत्यानिनकैः समर्थ्यते। सच्चणिहितंकताइंपि॥ सत्यंनिश्चितं। कृतान्यपि। कृतान्यपिसत्यानिशपथादीनिनिश्चितं सत्यमितिज्ञात्वापिकेनेसमर्थ्यते। प्र· अहितपकेव हिं। अहितपक्षैः शत्रुवर्गैः॥ ७०॥ पन्नूणेति। णिधनेहृ

धणोहत्ताणम् अद्दासणंफचति चंफणिसूअणा स्सभोत्तूण। खोरतरतुक्खसआइ पावामोहंध आकरणं लपकिंलहन्ति ॥ ७१ ॥ विसमरणम्। सुद्धपेशाचिकम्। जाणिआणाइणिंमेदेमलिसा। किसवुच्चइ वोल्लरेसम्भरि। जोतिलसरिसवपीडपि

णाणनिधनेरणोहत्तानामध्ये। मड अणो। मदजनः शूरः। किंपत्तूण। किंप्राप्य। चंफणिसूअणास्स। जंभनिसूदनस्येंद्रस्य अद्दासणंफचति। अर्द्धासनंभजति। प्र-विसमरणं विषमंउग्रंरणं संग्रामंप्राप्येत्यर्थः। पावापापिनः। खोरतरतुक्खसआइ। घोरतरदुःखशतानि। भोत्तूण। भुक्त्वा। मोहंधआरकरणं। मोहांधकारकरणं किलहंति। किंप्राप्य लभंते। लपवदेत्यर्थः। प्र-विसमरणं। विषेणगरेणमरणं प्राप्यलभंते प्राप्नुवतीत्यर्थः ॥ ७१ ॥ सुद्धपेशाचिकं। सुद्धलौकिकस्योदाहरणमेकेनाहजेति। जाणिआणाइ। यानजानाति। निंदेभेनलि। निद्रयाविह्वला। साकिसवुच्चइ साकीदृक् उच्यते। बोल्लरे। संभलि। संभालीकुट्टनीमतेत्यमरः। या। निद्रयाविह्वलाकिमपिनजानातिसाकीदृगुच्यते। हेसंभसिवद-प्र। सुनेत्री। सुनेरी। त्वंसुनेत्र्यर्थैसुतेरीनिमध्यदेशीयाभाषा। जोतिलसरिसवपीडइजाणी। यस्तिलसर्षपात्पिडपितुंजानाति। कीसभणिज्जइ। कीदृग्भरायनेकथ्यते। सोविस्स णीसः विज्ञानी।

जाणीकीसभरीजइसोविस्मारी॥ ७२ ॥
सुतेहृत्री। इतिशुद्धलौकिकम्। इतिसंसुद्धजातिः
। एतावतापिदिङ्.मात्रमत्रक्रमान्दर्शितमपायै
नयेनहिमाद्यन्तितहृदस्तत्तन्दूषनाम्॥ ७३॥
इतिविदग्धमुखमण्डनेतृतीयःपरिच्छेदः ३॥
व्यक्तीकृत्यकमप्यर्थंस्वरूपार्थस्यगोपनात्। य
त्रबाह्यान्तरावर्थौकथ्येतेसाप्रहेलिका॥ १॥
साहिधार्थीचशाब्दीचविख्यातापुरशासने। अ
न्यार्थीस्यादर्थविज्ञानाच्छाब्दीशब्दविभागतः २

प्रासुतेहृत्री। शोभनस्तैलकाइत्यर्थेसुनेहृत्रीतिम
ध्यदेशभाषा॥ ७२॥ शुद्धलौकिकं। संशुद्धजातिःप
रिछेदमुपसंहरति। एतावतेति। प्रश्नानांदिङ्मात्रं
एकदेशंदर्शितं। अन्यत्स्पष्टं॥ ७३॥ कायस्थता
राचंदेणकृतविद्वन्मनोहराटीकेयमस्यांपूर्णोयंप
रिछेदस्तृतीयकः॥ प्रहेलिकाजातेर्लक्षणमाह व्य
क्तीत्येति। यत्रप्रश्नेकमप्यर्थंप्रकटयप्यस्वरूपार्थस्यव
क्तव्यार्थस्यगोपनाद्बाह्याभ्यंतरावर्थौकथ्येतेसाप्रहे
लिकाजातिःसदृशार्थस्यगोपनादितिपाठेतुसएवा
र्थः॥ १॥ एनस्याद्वैविध्यमेकेनाहसेति। पुरशा
सनेमहागंधे-॥ साप्रहेलिकाहिप्रकारा। साका। ए
कान्यार्थी। अपराशाब्दी। अर्थविज्ञानादपूर्वार्थदर्शनाद
र्थीभवतिशब्दविभागतःशब्दखंडनतःशाब्दीभवति २

तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः
गुरूणां सन्निधानेपि कः कूजति मुहुर्मुहुः ॥ ३ ॥
पानीयकुम्भः । आपाण्डुपीनकठिनं वर्त्तुलं सु
मनोहरम् । करैराकृष्यतेऽत्यर्थं किं हृद्यैरपि संस्पृह
म् ॥ ४ ॥ पक्कविल्वफलम् । इत्यार्थीजातिः ।

तत्रार्थीजातेरुदाहरणमाह तरुण्येति । नितंबस्थलं
आश्रितः सगतः तरुण्यायुवत्या आलिंगितः कण्ठे
ः गुरूणां श्वसुरादीनां संनिधाने निकटेपि वारंवार :
कः कूजति । मंजुशब्दं कः करोति । प्र- पानीयकुंभः । कि
ञ्चिन्नूनजलभृतकुंभः । यएवंविधंसनस्यावद्य मो
भविष्यतीति वात्स्यार्थः ओंतरोर्थः पानीयकुंभः अ
स्यगोपनाद्वहिष्प्रतीतिकरं कमप्यर्थं व्यक्तीकृत्योक्तं
विशेषणमुभयत्रतुल्यं । एवंविधा प्रहेलिकेति ॥ ३ ॥
उदाहरणांतरमाह । आपांड्विति । आपांडु ईषत्सां
डुपीनं स्थूलं कठिनं कठोरंच । आपांडुपीनकठिनं ।
वर्त्तुलं कलशाकारं । सुमनोहरं । मनःप्रीतिजनकं । सं
स्पृहं साकांक्षं यथास्यात्तथा हृद्यैः सहृदयैरपि करैर्हस्तैः
किमाकृष्यते । प्र- पक्कबिल्वफलं । आनरोर्थः अस्य
गोपनं कृत्वा बाह्यार्थस्तत्प्रतीतिकरउक्तः विशेषणं
तुल्यं ॥ ४ ॥ आर्थीजातिः ॥ शाब्दीजातेरु
दाहरणमाह । दुर्वारेति । दुःखेन वारयितुं शक्यं वीर्यं
पराक्रमो यस्य सतत्संबुद्धौ हे दुर्वारवीर्य त्वमपि पुरुषेसको

दुर्वारवीर्यसरुषि त्वयि कापयुग्मा श्यामा सपन्नहृदये सुपयोधरा च। तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये सैवाद्यवर्णरहिता वद नामकास्यात्॥ ५॥

शस्त्री। सदारिमध्यापि नवैरियुक्ता नितान्तरक्तापि सितैव नित्यम्। यथोक्तवादिन्यपि नैव दूतिका का।

पि सनि सपत्नः शत्रुस्तस्य हृदये प्रसुप्ता निद्रिता। का। शस्त्री। छुरिका। स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुके त्यमरः। कीदृशी श्यामा काला। सुष्ठु शोभनं पयो जलविशेषं धरतीति सुपयोधरा। पुनस्त्वयि तुष्टे सति सैव शस्त्री आद्येन वर्णेन रहिता। किं नाम स्यादूदा। प्र-स्त्री। युवती। कीदृशी श्यामा। श्यामा षोडशवार्षिकीति स्मृतेः। सुपयोधरा। सुस्तनी। कीदृशे। त्वयि। प्रणतानम्रीभूता ये शत्रवस्त एव सरोजानि तेषां। शरणाद् त्वान्सूर्यस्तस्मिन्॥ ५॥ शब्दी जाते हृदाहरणांतरमाह। सदेति। सर्वदाऽरिमध्यापि वैरियुक्तान नितान्तरक्तापि नित्यं सितैव। यथोक्तवादिन्यपि दूती नैव संचारिका न भवेदेव। दूती संचारिके समरस्समरः। ईदृशी कांता का नामेति त्वमाशु निवेदय। प्र-सारिका। पक्षिविशेषः। कीदृशी सदारिमध्या। त्र्यक्षरसारिकाशब्दे रिकारो मध्ये यस्याः सा। नित्यसितैव सकारेण इना संगतैव साकारसहितैव। यथोक्तवादिनी। यथा पठ्यते तथा पठति एवंविधा कांताः ककारो अंते

नामकान्तेतिनिवेदयाशु॥ ६ ॥ सारिका। शाब्दीजातिः। नीरसन्माउणासोवहुगुणवन्तउ॥भमइनिरन्तरुणीचलहोन्तउ। नरुगिज्जइणउणा। फलुपत्तुससुयोपरिन्माणइपावइसोविजसु॥ ॥७॥ गुणरुकवा। घरघरचल्लइसन्मलपिआरिजीवन्तिहोइवेरिणोरणारी। खाणवन्धइख।

यस्याःसा·सारिकेतिसिद्धं॥ ६ ॥ शाब्दीजातिः प्राकृतेपिप्रहेलिकोदाहरणमाहणीरसइति·नीरसःपुनः सवहुगुणवान्। भमतिनिरंतरंनिश्चलोभूत्वा· तरुरितिगीयते। नपुनःफलपत्रेतस्मिन्·सर्वत्रविरोधाभासः।यःपरिजानातिप्राप्नोतिसोपियशः। स्तनन्त्रभ्रमितिशेषः प्र·गुणरुकवो।गुणवृक्षः। कूपकोगुणवृक्षकः इत्यमरः।वहुगुणसुक्तोनौकामध्यस्यस्तंभइत्यर्थः॥ ७॥ उदाहरणांतरमाह घरेतिगृहेगृहेचलति· सकलप्रिया।जीवंतीभवति।वैरिणोरणारी।क्षणंबध्यतेक्षणंमुच्यते।क्षणंसकाकिनीतयाजानीत।नथाविचार्यतां। यथापाति श्रेरिता।सर्वत्रविरोधाभासः।गृहेगृहेचलतीत्यादिविशेषणविशिष्टाप्रेरितानयानितयाविधानारीजानीतवुध्यतां।प्र·पाशसारिः।पाशानांगजदंतघटितानांकाष्ठनिर्मितारक्तपीतादिकोष्ठिकासारिरित्युच्यते। पाशानांसारिःपाशसारिः कीदृशीगृहेचलती।प्रति

रामुज्झइ रवरा एकल्लीनइ जाराइ जइजाइ रा पेल्ली ॥ ८ ॥ पाशासारी। इतिप्रहेलिकाजातिः । कालसारादिकं हृद्यमजमारादिगूढकम्। विदग्धाइविदग्धानां कुर्वते दर्पशान्तये ॥ ९ ॥ अनुनेतुमानिन्या दयितश्चरणेसरागचरणायाः।

कोष्टंचलनति। सर्वेद्यूनकन्त्रियत्वात्सकलप्रियास्वरां गोष्टिकां नरेण बध्यते ताडयते। स्वरांबद्धापि गोष्टिकां नरेण गोष्टिकामुच्यते स्वरां वैरिणो रणारी। प्रतिवादिद्यूनकृतो नारी वशगा भवति। स्वरां — एकाकिनी। असुगमा भवतीत्यर्थः ॥ ८ ॥ प्रहेलिकाजातिः ॥ कालसारादिप्रश्नान्प्रकटयन्नाह कालेति। विदग्धाः कुशलाः। दुर्विदग्धानां पंडितमन्यानां दर्पशांतये गर्वपरिहाराय। अजमारादिगूढकं। अजः शिवः मारः कामस्ताभ्यामुपलक्षितं गूढं कुर्वते। कीदृशं तत्। कालसारादिकं कालगुप्तं। असारगुप्तं चादौ यस्य तत्। कालसारादिकं। हृद्यं यन्मुखनेत्रविकारादिगचेष्टा पामनोगतं बुध्यते तत् हृद्यमिति। आदिना पदगूढपादगूढार्थगूढवस्तुगूढपरिग्रहः ॥ ९ ॥ कालसारजातेरुदाहरणमाह द्वाभ्यां अनुनेतुमिति। भोवद कश्चिद्दयितो मानिन्याः स्त्रिया अनुनेतुं प्रसादीकर्तुं या वञ्चरणे पतितस्तावन्नत्स्वरां नत्कालंसमभन्नीतया कस्मादवधीरितः अवगणितः प्र र जस्वलाप्राप्तः। कीदृश्याः सरागचरणायाः सरागौच

यावत्पतितस्तनयानन्तरमवधीरितः कस्मात्
॥ १०॥ रजस्वलायतः। अवलोकयस्तनोबद्धा
गुञ्जाफलविभूषितो। निश्वस्य रोदितुंलग्नाकु
तोव्याधकुटुम्बिनी॥ ११॥ असारस्तनयोयतः
।कालसारजातिः। दरदिटूचूत्रमंकुलंपिच्छि।
असहिष्णाविरहिणीसहियम्।राभिन्त्रोकं ।

लक्तादिनालोहितो चरणोयस्याःसातस्याः।
अद्याहंपुष्पवतीनायंप्रसादनकालइतिभावः॥१०
अवलोकयेति।भोवद-कश्चिद्व्याधकुटुंबिनीवध्वा
स्नुषायागुंजाफलविभूषितोस्तनोदृष्टोनिश्वस्यक।
स्माद्रोदितुंलग्नावदेत्यन्वयः।उ-असारस्तनयोय।
तः।असारोनिर्बलःसारोबलेस्थिरांशेचेत्यमरः।इ।
दानीमत्पुत्रस्यहस्तिहननेसामर्थ्यंबलंनास्ति।तेन।
गजमुक्ताभूषणाद्यभावात्पूर्वकालंसंस्मृत्यरोदि।
तुंलग्नेतिभावः॥ ११ ॥ कालसारगुप्तं।हृद्यजा
तेरुदाहरणाद्वयंद्वाभ्यामाहदरेति।दरदृष्टचूतमुकु।
लांप्रेक्ष्यसख्याविरहिणींसखीनमितःकंकेलितरुश्च
तश्चरणाहतःकस्मात्।सख्यावयस्ययाईषत्चूतमु।
कुलमाम्रमंजरींदृष्ट्वातयावियोगिनीसखीदृष्टाअ
शोकवृक्षोनमितस्तयाचूतश्चरणेनाहतस्ताडितः
कस्माद्वद-केनापिकथितंअस्मिन्नशोकेनमितेऽ।
स्याःप्रियोनमितःसमेष्यत्यतःकारणादशोकोन।

केशिन्नरुचूल्लोचलग्गाहल्लोकन्तो॥ १२ ॥
पिच्छंनमणिमिसच्छपिच्छिल्लवहुल्लाराभ
ङ्गिभिरुकुवल्लंरम्।दंसिल्लकल्लाइसीसेक
नोदोजाइकुसुमाइ॥ १३॥ इतिकालसा
रादिहृद्यजातिः॥ रविसुतकृतगोकर्णाच्यु
तिविषयगुणास्वरो वना ल्पमधरः। ॥

मितः आम्रवृक्षस्यपादाह्या तेनपुष्पादिकंजाय।
तइतिप्रसिद्धारीतिः।अग्नेवसंतकालंज्ञापकाम्र।
पुष्पादिदर्शनेनविरहिणापादुःखंभविष्यतीतिहे।
तोराम्रस्वग्गाहतः कृतः।चरगाह्या तेनास्यपुष्पा
दिकंजातंनपुनर्वसंतत्रुं नेतिहृद्योर्थः॥१२॥ ॥
पिछंनमिति।कयाचनवधूकयाभिक्षाचरमनिमि।
त्तास्पेरस्तंतप्रेस्यउक्तिः।हेजातीकुसुमेदर्शयित्वा
कृतः शीर्षे. शिरसिकृतेमोविद्वन्चद-केनाप्युक्तं।
जातीकुसुममारक्तं।चंद्रसूर्यौजातीकुसुमोपमौय
दान्यारक्तौभविष्यतस्तदायांसंध्याकालेत्वयासंग
मःकर्त्तव्यइतिवधूकयोक्तमितिस्ह्द्योर्थः हृद्यजा
तिः॥ १३॥ अजगूढस्योदाहरणमाह रवी
ति।असमाअयुग्मावारुकरुचिर्यस्मिंस्तदसमरु।
कृनिश्शूलं।तत्याणोयस्यसमरुक्पाणिःशिवोऽवि
त्वंजगत्विश्वंचिरमव्यात्रक्षतु-कीदृशःरविसुत।
कृतगोकर्णःरविसुतःकर्णस्तस्मिन्कृतः स्यापि

नरकशिरा जगदखिलञ्चिरमव्यादसमरुकृपा । शिः ॥ १४ ॥ क्रुधेनसुप्रीनयनाश्रयासदग्धोन्म ।

नोगोकर्णोन्महिर्येनसः श्रुतिविषयगुणांवरःश्रुतेःकर्ण स्यविषयः शब्दः सगुणोयस्याकाशस्यसएवांवरंवस्त्रं यस्यसः । शब्दगुणमाकाशमितितर्कभाषा । वनात्मं धरः वनंजलंआत्माशरीरंयस्यसवनात्माचंद्रस्तंध रतीति । जीवनंभुवनंवनमित्यमरः । आत्मापुंसिस्व भावेचप्रयत्नमनसोरपि । धृतावपिमनीषायांशरीर ब्रह्मणोरपीतिमेदिनिः नरकशिरः । नराणांकानि । शिरांसिशिरसियस्यसः कंशिरोंवुनोरित्यमरः अस्मिन्श्लोकेअजस्यगोपनमुक्तं ॥ १४ ॥ मारगूढस्योदाहरणमाह क्रुधेनेति दर्दुरहर्षकालेद दुरामंडूकास्तेषांहर्षकालेत्रर्थोन्मेघागमेभीमस्या नुजोऽर्ज्जुनः ससवर्णोजोमहीरुहस्तं अर्ज्जुनवृक्षं ककुभंभजंतीतिपंक्ते · भीमानुजगोजभाजोमयूरान्नृ त्यंति । नदीसर्ज्जोवीरतरुरिंद्रद्रुःककुभोर्ज्जुनइत्य मरः । दर्दुरस्तोयदेभेकेवाद्यभांडादिभेदयोरितिमे दिनिः । कीदृशाः । कुंपृथ्वींदधतीतिकुधाःशैलाः । तेषामिनःस्वामीहिमाद्रिस्तस्मात्सूतिप्रसवोयस्या सापार्वतीतांप्रीणातीतिकुधेनसुप्रीमहेशस्तस्य नयनाश्रयाशेननेत्राग्निनादग्धोयःकामस्तेनउ । न्मत्ताः । आश्रयाशोवृहद्भानुरित्यमरः । पुनः कीदृशाः

दाददुरहर्षकाले। स्वजन्म भक्षप्रियभोजनाश
त्वन्निभीमानजगोजभाजः॥ १५॥ ॥
इत्यजमारादिगूढजातिः। वानाच्छीनिररिधो
रंवोहरतान्महासुरीदयितः। वीडव्राङ्गनोका।

स्वजन्मानिस्वापत्यानिभक्षयंतीतिस्वजन्मभक्षाः
सर्पाः तेषांप्रियोवायुः सएवभोजनंयेषांते स्वजन्म
भक्षप्रियभोजनाः सर्पास्तान्अश्नंतीतिस्वजन्मभ
क्षप्रियभोजनाशनाः। जनुर्जननजन्मानिजनिरुत्पत्तिरुद्भव
इत्यमरः अजमारस्य गोपनंउक्तंउभाभ्यामजमार
गूढमितिसिद्धम्॥१५ ॥ अजमारगूढम् १५
ईपदगूढस्योदाहरणमाह वानेति। ईर्लक्ष्मीस्त
स्याद्दयितोविष्णुर्वोयुष्माकं। अरंअकल्याणंअरं
शीघ्रंहरतात्दूरीकरोतु। अरंशीघ्रेचचक्रांगेशीघ्रगे
पुनरन्यवदितिमेदिनिः। कीदृशः। वानाच्छीतिः। वा
तमत्तीतिवातात्सर्पः सएवशीतिः शयनंयस्यसः। ॥
अरिचक्रंदधातीत्यरिधः। महान्तः असवः प्राणा
यस्यसमहाप्राणाः। महासिरितिपाठेतु। महानसिर्नं
दकाभिधः खड्गोयस्यसः। वीनांपक्षिणामिट्स्वामी
वीट्गरुडः। अपांजलानांराट्राजाअव्राट्समुद्रः। तौवी
डव्राजौगरुडसमुद्रौयानौकसीवाहनस्थानेयस्यस
वीडव्राड्यानौका। वार्जलंवाहोयस्यसवावाहोमेघ

वावोह्लाभोसमस्नानाः ॥ १६ ॥ इतिपद
गूढजातिः ॥ दयावान्प्रपतन्शुद्धः प्रवुद्धकम
लेक्षणः । पापापहस्त्रिभुवनम्बुद्धः पायाद्पाय
तः ॥ १७ ॥ नसज्जतिक्वचिद्दोषेप्रीणातिज्ञग

स्नहृद्राभाकांतिर्यस्यसः वावोह्लाभोमेघश्यामः । मे
घश्यामंपीतकौशेयवासमितिस्मृतेः । अस्नंनीतं
अनशकटंयेनसअस्नानाः । शकटासुरभंजनमि
तिस्मृतेः ॥ १६ ॥ इतिपदगूढं ॥ पादगूढस्यो
दाहरणमाह दयावानितिवुद्धःसुगतस्त्रिभुवन
मपायात्नाशान्रक्षतु । कीदृशः दयावान्दयायु
क्तः प्रपतःपूतःशुद्धोऽनघः । प्रवुद्धकमल मिवेक्षणं
यस्यसः पापमपहंतीतिपापापहः अत्रचतुर्थपा
दाक्षराणित्रिषुपादाक्षरेषुगूढानिगुप्तानितिष्ठं
ति ॥ १७ ॥ उदाहरणांतरमाह नेति । परमुत्क
ष्टंपथास्यात्तथासएकोमुख्योविष्णुःशिवोवाचिर
कालंजयतिसर्वोत्कर्षेणवर्त्ततेइत्यर्थः । ब्रह्मादि
स्तंबपर्यंतप्राणिहृत्मंदिरेमल्लः । एकोवसतियोदे
व इतिपद्मपुराणं । एकोदेवःकेशवोवाशिवोवेति
भर्तृहरिः । सकःयोजगतांचराचरात्मकानांभुवनानांम
नश्चित्तंप्रीणातितर्पयति । क्वचिदपिदोषेअपराधे
दोषरूपेसंसारेवानसज्जति नासक्तोभवति । अस
क्तंभूतभृच्चैवेतिस्मृतेः । कीदृशः एकःश्रीमानूल

तास्मनः। यस्यक स्सपरः श्रीमाञ्श्रिरङ्गपतिसज्जनः ॥ १८ ॥ इतिपादगूढजातिः। दृष्टोमयास रिवब्रूहिरोदयित्वागतोद्यमासु। भद्रेकल्याणि नीभूयाः प्राचीमप्यश्यपातिनिर्मलाम्॥ १९ ॥ डाहिरणपवणुविग्गासमोलइलोन्मणाइपभ हिम्मवहू। णिउणासहीउणानीसकस्से

स्मीपुक्तः सज्जनः संतःसाधवःजनाभक्तायस्य सः। अत्रापिचतुर्थपादाक्षराणित्रिषुपादाक्षरे षुदृष्टव्यानि॥१८॥ पादगूढं॥ वस्तुगूढ स्योदाहरणमाह दृष्टइत्यादिना। काचित्स खीब्रूते।हेसखि। अद्यमांरोदयित्वागतएवंवि धोमयादृष्टःस्वप्नइतिशेषः।किंकारणंब्रूहि।स खीवदति।हेभद्रेकल्याणि।त्वंकल्याणिनीभूयाः कथमितिपृष्टे।प्राचीमतिनिर्मलांपश्य प्रातःका लीनःस्वप्नःशीघ्रफलप्रदः।यथाप्राचीपूर्वादिक्सू र्येणभुज्यतेतथात्वमपिदयितेनशयिष्यसइतिभा वः॥१९॥ दक्विणेति।दक्षिणपवनोद्विग्ना संमीलतिलोचनेपथिकवधूः।निपुणासखीपुनः कर्णावपिकरोतिस्थगयितुं।काचनपथिकवधूःद क्षिणपवनेनमलयानिलेनोद्विग्नासतीलोचनेनि मीलति।तदानिपुणाचतुरासखीतस्याःकर्णावपि स्थगयितुमाछादयितुंयत्नंकरोति।मासएतस्याः

विवरेह कुकेइइम् ॥ २० ॥ अथ गूढज्ञा
तिः ।स्तुतिनिंदानदर्यत्वाह्यर्थमर्थद्वयोदयात् ।नि
ह्नवात्कथितस्यापि शब्दव्याजादपह्नुतिः ॥ २१
वहुदोषो गुणध्वंसी गोहन्ता जनपीडकः । करो
तु विरथो लोकमस्तमाप्तमहोदयम् ॥ २२ ॥
विष्णोः स्तुतिनिन्दे। सततमहितजनवत्सलोव

श्रवणपथेवंसंततं श्रवणं भवेदितिहेतोः कर्णौ
स्थगितावितिभावः ॥ २० ॥ गूढज्ञातिः। स्तुति
निंदादिज्ञातीनांलक्षणमाह स्तुतीति। तयोः स्तु
तिनिंदयोर्यस्तदर्थस्तस्य भावस्तदर्थत्वंनस्मातद
र्थत्वात् स्तुतिनिंदाज्ञातिर्ज्ञेया। अर्थद्वयस्योदयात्
ह्यर्थज्ञेयं। निन्हवाद पलापात्कथितस्यापि वाक्य
स्य शब्दव्याजादपह्नुतिज्ञातिः अपलापस्तु निह्नव
इत्यमरः ॥ २१ ॥ स्तुतिनिंदोदाहरणमाह ॥
वह्विति। स्तुतिपक्षे वहवो दोषाः भुजायस्मिन्सः ।
चतुर्भुजः गुणध्वंसी। गुणातीतः। गोहंता अरिष्टा
सुरहंता। जनपीडकः। जनार्दनः। विः पक्षी रथो य
स्य स विरथो गरुडध्वजः अः विष्णु स्तल्लोकं दै
त्यादिपीडितं विश्वं आप्तगुणोदयं प्राप्तमहोदयं करोतु
निंदापक्षे। विरथो भग्नरथो भग्नरथः आप्तगुणोद
यं लोकमस्तं करोतु। अन्यत्स्पष्टं ॥ २२ ॥
विष्णोः स्तुतिनिंदे। उदाहरणांतरमाह सततेति। राज्ञ

हुभयपापपंक्तिपापरिभ्रष्टः। इहकलिकालेकु
पतिर्जगतस्त्वम्परमदुःखकरः॥ २३ ॥ ॥
राज्ञस्तुतिनिन्दे। इतिस्तुतिनिन्दाजातिः। प्र
सन्नवदनश्श्रीमानयंस्वश्रगुणोदयः। करप्र
चारसुभगोराजानन्दयतिप्रजाः॥ २४ ॥ चन्द्र
भूपती॥ विनायकाहितप्रीतिर्देवोगङ्गांबभार
यः।
स्तुतिपक्षे। सततंमहिताःपूज्यायेजनास्तेषुवत्स
लः कृपालुस्तत्संबोधनं। हेसततमहितजनवत्सलइ
हकलिकालेत्वंभवान्जगतोविश्वस्यपरमत्यर्थं। अदुः
खकरःसुखकरः। कीदृशस्त्वं। बहुभयकारिणीपापा
पंक्तियातयाऽपरिभ्रष्टः ऽनिंदितःकुपतिःकोः पृ
थ्व्याःपतिः निंदापक्षे। सततंऽमहितजनवत्सल। ब
हुभयपापपंक्तियापरिभ्रष्टोनिंद्यः। कुत्सितःपतिःकु
पतिः। परमत्यंतंदुःखंकरोतीतियःसतथा॥ २३॥
राज्ञःस्तुतिनिंदेस्तुतिनिंदाजातिः चंद्रपक्षेकराःकि
रणास्तेषांप्रचारेसुभगःसोमोराजाबनस्पतीनामिति
राज्ञःपक्षेकरोबलिः अन्यत्तुल्यं॥ २४ ॥ ॥
चंद्रभूपती॥ विनायकेति॥ सउमाधवःसदा
त्वामव्यात्रक्षतु॥ योदेवोगंगांबभारकिंभूतःशिवः
विनायकेगणेशे आहितापीतिर्येनसः पुनः अव्ययः
सफलःविक्रमोयस्यसः॥ विष्णुपक्षेसमाधवस्त्वा
मव्यात्यःदेवःअगंगोवर्द्धनंगांभुवंबभारपुनःवी

सर्वेदोमाधवस्सत्वामव्यादत्यर्थविक्रमः॥२५॥
शङ्कःखवासुदेवौ। द्व्यर्थजातिः। शीत्कारञ्जनयति।
व्रणयत्यधरन्तनोतिरोमाञ्चम्। नागरिकः किम्मि
लितोनहिनहिसखिहेमनःपवनः॥ २६ ॥
रुचिरस्वरवर्णपदारसभाववतीजगन्मनोहरति।

नांपक्षिणां नायकः गरुडः तन्नाहितप्रीतिः वा॥ विना
यकादीनाः तेष्वाहितप्रीतिः॥पुनःसर्वेदानीतिसर्वे
दः॥ पुनः अत्यर्थः उपचितार्थः विक्रमोयस्यसः। विक्र
मस्त्वतिशक्तितेत्यमरः॥ अत्यर्थविक्रमइतिपाठे॥शि
वपक्षे। अतिविक्रमः॥ हरिपक्षे अत्यर्थविनागरुडा।
ख्येनपक्षिणाक्रमोगमनंयस्यसः। शंकरवासुदेवौ॥ इ
तिद्व्यर्थजातिः॥ २५॥ सीत्कारमिति॥ काचित्काच।
न्प्रतिवक्ति। किमुननर्के॥ नागरिकोमिलितः॥ सीत्का
रंशिक्षयति॥ अधरमोष्ठंव्रणयति। स्तनयति॥रोमांचं
तनोति॥सातांकथयति॥हेसखिनागरिकोनमिलितः
किमुहेमनःपवनः॥हेमनोवायुः॥वायुरपिहिमसंस
र्गान्नागरिकक्रियांकरोतीत्यर्थः॥ २६ ॥ ॥
रुचिरेति॥कश्चित्कंचनप्रतिकथयति। जगन्मनोभुवन
चित्तंयन्नर्तिंतरुणीहरति॥ कीदृशीरुचिरोमनोज्ञः॥स्र
शोभनोवर्णः पदंचरणंयस्याः सातयोक्ता॥ पुनःरसभा
ववती। शृंगारभावयुक्ता॥ सतंप्रतिकथयति· नहिनहि
तरुणीनहरति। किंतुमधुरशीलस्यउन्नमस्वभावस्यबा।

तन्किंतद्रुणीनहिनहि वाणीवाणस्यमधुरशील स्य॥ २७॥ अपह्नुतिजातिः॥ स्वरेषु विन्दुयुक्ते षु हलांयदवबोधनम्। तद्विन्दुमदितिप्राहुः केचि द्विन्दुमतीमिति॥ २८॥ मानसीनाभसीत्याद्या बु ध्यादौन्यासतोहियाः। बाहुल्येनाप्रयोगात्तुनेहता साम्प्रदर्शनम्॥ २९॥ त्रिनयनचूडारत्नमित्रंसि न्धोःकुमुद्वतीदयितः। अयमुदयतिघुसृणारुणा रमणीवदनोपमश्चन्द्रः॥ ३०॥ ७ ॥

णस्य वाणभट्टस्य कवेः वाणीजगन्मनोहरतीत्यर्थः किं भूता वाणीरुचिराणिसरलानिमनोज्ञानिसुवर्णानिस मीचीनाक्षराणिपदानियस्यां सा पुनः कीदृशी रसाः शृंगारादयः भावः स्थायिसंचारिभेदाः॥ स्वेदनिर्वे दादयस्तद्युक्ता॥ २७॥ इत्यपह्नुतिजातिः॥ स्वरेष्वि ति॥ विंदुयुक्तेषुस्वरेषुसत्सुहलां अक्षराणांयदवबो धनं ज्ञानंतद्बिंदुमदितिप्राहुः केचिद्बिंदुमतीतिक थयंति॥ २८॥ मानसीति॥ वुध्यादौन्यासितामा नसीनाभसीत्याद्याज्जातय स्तासां बाहुल्येनाप्रयो गाः संति यतः तस्मादिहग्रंथे तासां ज्ञानीनांप्रद र्शनंनकृतमिति॥ २९॥ त्रिनयनेति॥ त्रिनयनस्यशं भोश्चूडारत्नं शिरोमणिः सिंधोःसमुद्रस्यमित्रंकुमुद्व तीदयितः कुमुद्वतीभर्ता॥ घुसृणेनकुंकुमेनरक्तंन दृपमश्चंद्रोयमुदेति॥ इति विंदुमतीजातिः॥ ३०॥

इतिविन्दुमतीजातिः। क्रियादिकम्यदेयत्र पदसा
धनकौशलात्। स्फुटन्नलक्ष्यतेतस्यान्क्रियागुप्ता
दिकंयथा ॥ ३१ ॥ राजन्नवघनश्याम निस्त्रिंशा
कर्षदुर्जय। ग्माकस्त्वंवसुधामेतांविद्विषोघ्नरणे
वहून् ॥ ३२ ॥ पुंस्कोकिलकुलैस्तैनितान्तम
धुरारवैः। सहकारद्रुमास्यांवसन्तेकामपिप्रि
यम् ॥ ३३ ॥ इतिक्रियागुप्तजातिः। नकरोतु

क्रियादिकमिति ॥ यत्रस्थितमपिक्रियादिकंस्फुटं।
नलक्ष्यते ॥ पदसंधानयोजनेयत्कौशलंचातुर्यं ।
तस्मात्तत्क्रि यागुप्तादिकमुच्यतेयथास्यात्तथाह।
॥ ३१ ॥ राजन्निति ॥ हेराजन्घनइवश्यामोयो
निस्त्रिंशः तस्यआकर्षः आकृष्टिः तेनदुर्जय
स्त्वमाकस्त्वंवसुधांभूमिंअवरक्ष ॥ अवरक्षणेलो
ट्मध्यमपुरुषस्यैकवचनेरूपं ॥ रणेयुद्धेवहून।
विद्विषः शत्रूनघ्नखंडय दोअवखंडने मध्यमपुरु
षस्यैकवचनेलोट्रूपे ॥ अवस्यत्रक्रियागुप्तिः ॥ न।
वित्यग्रेनिम्नगतः ॥ ३२ ॥ पुंस्कोकिलेति ॥ एतेरस्याः
सहकारद्रुमाः रसालतरवः कामपिअनिर्वचनीयांप्रि
यशोभामधुः धारयन्तिस्मक्वचसंतेपुंस्कोकिलकुल
नितांतमत्यर्थंआरवैः शब्दैः अकारभ्रमान्क्रिया
गुप्तिः ॥ ३३ ॥ इतिक्रियागुप्तम् ॥ * ॥
* नेति ॥ अयंवीरोरोषंनकरोतुनविदधातु ॥

नामरोषवन्नवदतु परुषवन्नहन्तु वाशत्रून्। रसयतिमहीमखिलान्तथापिधीरस्यवीरस्य ॥ ३४ ॥ शरदिन्दुकुन्दधवलन्नगनिलयरतम्मनोहरन्देवम्। येस्मुहृतंकृतमनिशन्तेषामेवप्रसादयति ॥ ३५ ॥ कर्तृगुप्तम्। शीकरासारसंवाहोसरोजवनमारुतः। प्रक्षोभयतिपान्थस्त्रीनिश्वासैरिवमांसलः ॥ ३६ ॥ सुभगतवाननपङ्कज

परुषंकठोरंनवदतु। शत्रूननहंतु। नामेत्यस्यातुषंगः। तथापिवीरस्यधी: कर्त्रीअखिलांमहींरंजयतिरसतीति। धीरस्येत्यत्रधीरशब्दस्यभ्रमः ॥ ३४ ॥ शरदीति। तेषामेवपुंसांमनःकर्तृ। हरंदेवंप्रसादयति। येरनिशंसंततंसुहृतंकृतं कीदृशंहरंशरदिंदुःशरत्कालीनश्चंद्रःकुंदःकुसुमविशेषस्तद्वद्धवलंशुभ्रं। पुनःकीदृशंनगःकैलासःसएवनिलयोगृहंतत्ररतः तं। मनोहरमितिभ्रमः। कर्तृगुप्तं ॥ ३५ ॥ शीकरेति। जवनमारुतोवेगवान्वायुःसरःकासारंक्षोभयति। किंभूतोवायुः शीकराणामम्बुकणानांआसारोधारासंपातः तंसंवहतीतितथोक्तः वायुः कइव। पांथस्त्रियः पथिकवध्वः तेषांपतिविहाराभावाद्येनिश्वासाः तैर्मांसलः पुष्टइव। सरोशब्दभ्रमोत्रकर्मगुप्तं ॥ ३६ ॥ सुभगेति। हेसुभगरमणीयोदिवसर्कस्यपुण्यवतःपुंसः त्वांसुखंकुर्वन्अपतिगच्छति। अपगतो। राम

दर्शनसञ्जातनिर्भरप्रीतेः ॥ शमयतिकुर्वन्दि
वसः पुण्यवतः कस्यरमणीयः ॥ ३७ ॥ ॥
कर्मगुप्तम् । पूतिपङ्कमयेऽत्यर्थंकासारे दुःखि
तान्यमी । दुर्वारामा नसंहंसागमिष्यन्तिघना
गमे ॥ ३८ ॥ अहंमहानसायातः कल्पितोन
रकस्तव । मयामांसादिकम्भुक्तम्भीमञ्जानीहि
मांवक ॥ ३९ ॥ करणगुप्तम् । अम्भोरुहम
येस्नात्वावापीपयसिकामिनी । ददातिभक्तिस
॥

पतीत्यंत्रभ्रमः ॥ किंभूतस्यपुण्यवतः नवयदान
नपंकजंमुखकमलं तस्यसंदर्शनेनसंजातानिर्भरा
तिशयि ताप्रीतिर्यस्यसतथोक्तस्तस्य ॥ कर्मगुप्तं ॥
॥ ३७ ॥ पूतीति ॥ अमीहंसाः दुर्वाराः दुर्निवाराः
संतोमानसंसरः प्रतिगमिष्यंति ॥ कदाघनागमेव
र्षाकाले किंभूताः हंसाः अत्यर्थंदुःखिताः केन । प
से ॥ दुर्वारादुष्टजलेन । वार्वारिसलिलंजलमित्यमरः
। क्वकासारे ॥ पूतिपंकमयेदुर्गंधिकर्दमयुक्ते ॥ ३८
करणगुप्तं ॥ अहमिति ॥ अहंमहानसायातः पंच
मीतत्पुरुषः ॥ पाकस्थानगत इत्यर्थः पक्षेमहान
सामहाशकटेनयानः तवनृकरः मनुष्यदंडः कल्पि
तः ॥ मयामांसादिकंसर्वंभुक्तं ॥ हेवकहेदैत्यत्वंमांभी
मंजानीहि ॥ करणगुप्तं ॥ ३९ ॥ अंभोरुहेति ॥ भक्ति

म्पन्नापुष्पसौभाग्यकाम्यया ॥ ४० ॥ प्रस्
त्या युक्तमार्गस्यतवसम्मानिताश्रिताः। स्पृह
यन्तिनकेनामगुणरत्नालयप्रभो ॥ ४१ ॥ सम्प्र
दानगुप्तम्। शिलीमुखैस्त्वयावीरदुर्वारैर्निर्जि
तोरिपुः। विभेत्यत्यन्तमलिनोवनेपिकुसुमाकु
ले ॥ ४२ ॥ सरसीतोयमुद्धृत्यजनः कन्दर्पका
रकम्। पिबत्यम्भोजसुरभिस्वच्छमेकान्तशीत
लम् ॥ ४३ ॥ ७ ॥ ७ ॥ ७ ॥

संपन्नाकामिनीसौभाग्यकाम्यया ॥ इः कामः तस्मै
अपे ॥ अंभोरुहं पुष्पंतस्मैददाति। किंकृत्वावापीपयसि
स्नात्वा ॥ ४० ॥ प्रसत्येति ॥ हेउक्तमार्गस्थहेसंमानि
तहेगुणरत्नालयहेगुणसमुद्रप्रभो ॥ आश्रिताः से
वकाः केतवप्रसत्यैप्रसादायनस्पृहयंतिवांछंतिसंप्र
दानगुप्तं ॥ नामेतिसंभावनायां ४१ शिलीमुखैरिति ॥ हेवीरत्व
यादुर्वारैः शीलीमुखैः निर्जितोरिपुः शत्रुः कुसुमाक
रेपिवने ॥ अलिनोभ्रमरादत्यंतंविभेति ॥ अलिवा
णोशिलीमुखावित्यमरः ॥ अत्यंतमलिनइतिभ्र
मः ॥ शिलीमुखपदस्यवाणभ्रमरसाधारण्याद्भय
हेतुत्वमितिभावः ॥ ४२ ॥ अयंजनः सरसीतः कासा
रात्कंजलमुद्धृत्यपिबति ॥ सरसीतोयमितिभ्रमः ॥
किंभूतंकंदर्पकारकंमदजनकं ॥ पुनः किंभूतं अंभोज
सुरभिकमलसुगंधितं ॥ पुनः स्वच्छंनिर्मलंपुनः एकांत

अपादानगुप्तम्। याकटाक्षच्छटापातैः पवित्रय तिमानवम्। एकान्तेरोपितप्रीतिरस्तिसाकमलालया॥४४॥ विपद्यमाननतासिद्धासर्वस्यैवनिरूष्मणः। तथाहिमस्तपादाभ्यान्निर्वाणोहन्त्यपञ्जनः॥४५॥ अधिकरणगुप्तम्। इतिकारकगुप्तजातिः। तूर्णीवमधुमासेऽस्मिन्रसालद्रुममञ्जरी इयमुद्भिन्नमुकुलैर्भातिन्यस्तशिलीमुखा॥४६॥

शीतलंभृशंहिमं॥ अपादानगुप्तम्॥४३॥ येति॥ याकटाक्षच्छटापातैः मानवंपवित्रयति॥ साकमलालयात्लक्ष्मीएकांतेरहःस्थाने॥पक्षे॥एविष्णौकांते। प्रियेरोपितप्रीतिरस्ति॥ अत्रएकांतेनिभ्रमः॥ अधिकरणगुप्तम्॥४४॥ विपद्यमाननतेति॥ विपद्यमानस्य भावः विपद्यमानता॥पक्षे॥ विपदि अमाननताइतिच्छेदः॥ सर्वस्यैवनिरूष्मणः निरहंकारस्यनिस्तेजसोविपदि आपन्नो॥ अमाननता अनादरतासिद्धा॥ तथाही तिनिदर्शने॥ अयंजनः पादाभ्यांनिर्वाणमदाहकंभस्मनिहंति॥ विपद्यमानशब्दभ्रमोत्र॥ अधिकरणगुप्तं॥४५॥ तूर्णीति॥ अस्मिन्मधुमासे वसंतेरसालद्रुममंजरीभाति। शोभते। उद्भिन्नमुकुला। इतिपदच्छेदः॥ कथंभूतारसालद्रुममंजरीउद्भिन्नमुकुला अंतरितकुड्मला॥ पुनः कथंभूतान्यस्तशिलीमुखा॥ अलिबाणौशिलीमुखावित्यमरः॥

स्य

प्राप्तमदोमधुमासः प्रबलाहृत्कृप्रियतमोविदूर।
स्थः। असतीयंसन्निहिताहाहतशीलासखीनिप
तम्॥ ४७॥ सम्बन्धगुप्तजातिः॥ सर्वज्ञेनत्व
याकिञ्चिन्नास्त्यविज्ञातमीदृशम्। मिथ्यावचा
स्त्वयाहित्वमसत्यंवेत्सिनक्कचित्॥ ४८ ॥
कमलेकमलेनित्यम्मधूनिपिबतस्तव। भविष्य
तिनसन्देहः कष्टन्दोषाकरोदये॥ ४९ ॥

उत्प्रेक्ष्यतेकविः॥ केव॥ इः काम स्तस्यतूणीवइ
षुधिरिव उदि त्रमुकुलेरितितृतीयाबहुवचने।
भ्रमः॥ ४६॥ प्राप्तेति॥ अदोमधुमद्यंप्राप्तंभुक्तं।
पीतंअनुभूतं॥ मासः चंद्रमसः प्रबलाहृत्कृदीप्तिः॥
प्रियतमोपिदूरस्थः इयमसतीअसाध्वी संन्निहिता।
निकटवर्तिनीइयंसखीनिपतंनिश्चितंहनशीला॥ हाक
ष्टमिदं॥ मधुमासशव्दस्यप्रथमैकवचनेभ्रमः॥ सं
बंधगुप्तं॥ ४७॥ सर्वज्ञेति॥ सर्वज्ञइनइतिछेदः हे सर्व
ज्ञहेइनप्रभोइदृशंकिंत्वयाविज्ञातंनास्तितथापित्व
मसत्यंवचोवाक्यंमिथ्याक्कचिन्नवेत्सि॥ सर्वज्ञेनेति
तृतीयैकवचनेभ्रमः॥ ४८॥ कमलइति।
पक्षेकंअलेइतिछेदः॥ हे अलेहेभ्रमरकंसुखंय।
थास्यात्तथाकमलेपद्मेमधूनिमकरंदाःनित्यंपिब
तस्तवदोषाकरोदयेसंदेहो भविष्यति॥ कष्टमेत
त॥ कमलेत्यत्रसप्तम्येकवचनेभ्रमः आमंत्रितगुप्तं

आमन्त्रितगुप्तजातिः॥ विषादीभैक्ष्यमश्नाति सदारोगन्नमुञ्चति। रुष्टेनापित्वयावीरशम्भुना ऽरिस्समः कृतः॥ ५०॥ नित्यमाराधितादेवैः कंसस्यद्विषतस्तनुः। मण्डलाग्नंगदांशङ्खं चक्रञ्जयतिबिभ्रती॥ ५१॥ समासगुप्तजातिः। नितान्तस्वच्छहृदयंसखिप्रेयान्समागतः। त्वाञ्चिरादर्शनप्रीत्यायस्सदालिङ्गतिस्वपने॥ ॥५२॥

विषादीति॥ विषमत्तीतिविषादीशंभुः॥पक्षेविषादोस्यास्तीति। भैक्ष्यं। भिक्षोपस्थितमन्नादि अश्नातिभुंक्ते॥सदारःसहदारैर्वर्ततइति॥ अगंकैलासं नमुञ्चति॥पक्षे॥सदासर्वदारोगंनमुंचति।हेवीररुष्टेनापित्वया अरिःशत्रुः शंभुनारुद्रेणसमःकृतः ॥५०॥ नित्यमिति॥कंसस्यद्विषतोहरेः तनुर्मूर्तिर्जयति।किंकुर्वतीतनुः मंडलाग्नंखड्गं॥गदां।कौमोदकी॥ शंखंपांचजन्यं॥चक्रंसुदर्शनं॥ बिभ्रती दधतीपुनःकिंभूतातनुः नित्यंमालक्ष्मीर्यस्यासासनातेंदिरा॥ पुनरपिकीदृशी॥देवैःब्रह्मादिभिराराधितानित्यं आराधितेतिपदच्छेदभ्रमः समासगुप्तं॥ ॥५१॥ नितांतमिति॥ नितांतंस्वच्छहृत्अयमितिछेदः हेसखिसोयंप्रेयान्समागतःकीदृशःप्रेयान्नितांतमत्यंतंस्वच्छंशुद्धंमनोयस्यसः॥ यश्चिरादर्शनप्रीत्याअवलोकनप्रेम्णा समालिंग्यत्वांरं स्यनेक्रीडि

पुस्तक॥२८॥

कलिकालमिपन्तावद गस्त्यस्यमुनेरपि।मान।
संखराडयत्यत्रशशिखराडानुकारिणी ॥ ५३॥
लिङ्गगुप्तजातिः।प्रमोदत्त्वनयन्त्येवसदाराग्ट
हमेधिनः।यदिधर्मश्चकामश्चभवेतांसङ्गतावु
भौ॥ ५४ ॥ सुब्वचनगुप्तम्॥ कस्मात्त्वंतुवेलासी
तिसख्यस्त्रास्यरिएच्छति।त्वयिसन्निहितेनासु
दद्यात्किंकथयोत्तरम्॥ ५५॥ तिङ्वचनगु
प्तम्।वचनगुप्तजातिः।

कलिकेति॥ कलिका अलमितिच्छेदः तावत्छेदो
वाक्यालंकारे॥ अलमतिशयेनवक्तिकश्चिदहंकः
सदीयंमनः खंडयति॥ किंवाच्यमत्रमनः कोय।
मित्यपिपाठःकीदृशी॥ कलिका॥ शशिखंडंचंद्रा
र्द्धं॥ अनुकरोति॥ विडंबयति॥यासा॥ लिंगगु
प्तिः॥ ५३॥ सुब्वचनगुप्तस्योदाहरणमाह ।
प्रमोदमिति॥ सदा राधनमितिच्छेदः॥ राः द्रव्यं
गृहमेधिनः गृहस्थस्यप्रमोदंहर्षंसदैवनित्यंभे
वजनयति॥यदिधर्मश्चकामश्चद्वौसंगतौ
भवेतां॥ अत्रदारशब्दस्यप्रथमाबहुवचनेभ्रमः
सुब्वचनगुप्तं॥ ५४॥ तिङ्वचनगुप्तस्योदाहरण
माह कस्मादिति इतेत्यत्रातिङ्वचनगुप्तं काचि
न्नायिका प्रियतमेन।एष्टापि सखीषुविद्यमाना
सुलज्जया किंचिन्नोवाचेतिकारणादुद्विग्नमानसं
नायकं दूतीवदति हेसन्निहिन सर्वदानिकटस्थ

अन्योप्यर्थस्स्फुटोपत्रमात्रादिच्युतकेष्वपि।प्रतीयते विदुस्तज्ज्ञास्तन्मात्राच्युतकादिकम्॥५६॥ महाशयमतिस्वच्छन्नीरंसन्तापशान्तये। खलावासादतिश्रान्तास्समाश्रयत हे जनाः ५७ तुषारधवलस्स्फूर्जन्महामणिधरोऽनघः। नागराजो जयत्येकः पृथिवीधरणक्षमः॥५८॥ मात्राच्युतकजातिः ॥

ननु दूराद्रागतोसि कस्मात्त्वं दुर्वेल्लोसीति तवयितां। परिपृच्छति सति हे सख्यः यूयं इतः प्रयात· आसु। सखीषु सा दूतिकिं उत्तरं दद्यात्कथय ५५ इति। तिङ्चनगुप्तं मात्राच्युतकादेर्लक्षणमाह अन्य इति यत्र मात्रादिच्युतकेष्वपि सत्सु अन्योपि। द्वितीयोप्यर्थः स्फुटः। प्रकटः प्रतीयते ज्ञायते। तन्मात्राच्युतकादिकं तज्ज्ञाः प्रश्नविदो विदुर्जानी युः आदिना विंदु विसर्ग च्युतकादयः ५६ मा। त्राच्युतकस्योदाहरणद्वयंद्वाभ्यामाह महेति हे जनाः खलावासाद्दुर्जनस्थाननिवासाद् विश्रां। ताः संतः नीरं जलं समाश्रयत। नीरमित्यत्रमा त्राच्युतके कृते नरं सेवत किमर्थं संतापशांतये महाशयं गंभीरं अतिस्वच्छं निर्मलं ५७ तुषारे ति एको नागराजः शेषो जयति मात्राच्युतके कृ तेनगराजो हिमालयः विशेषणानि

सुश्यामा चन्दनवती कान्तानिलकभूषिता। क
स्येषानंगभूः प्रीतिम्भुजङ्गस्य करोति न॥ ५८॥
यथासत्प्रसवः स्निग्धस्सन्मार्गविहितस्थितिः।
तथा सर्वाश्रयस्सत्यमयमेव कुलद्रुमः॥ ६०
विन्दुच्युतकजातिः। महीरुहो विहङ्गानामे
ते हृद्यैः कलापिनाम्॥ ॥
उभयत्रतुल्यानि ५८ मात्राच्युतकम् विन्दु।
च्युतकस्योदाहरणद्वयं द्वाभ्यामाह सुश्यामे।
ति॥ एषा अनंगभूः कामभूमिः कांता स्त्री अ।
र्थात् वेश्या॥ कस्य भुजंगस्य वेश्यापतेः प्रीतिं न
करोति काक्का अनंगभूमिः करोत्येव॥ अनं गभू
रित्यत्रानुस्वाराकारलोपेऽन्योर्थः॥ पर्वतभूमिः
कस्य भुजंगस्य सर्पस्य प्रीतिं न करोति॥ किंभू
ता वेश्या सुशोभना श्यामा षोडशवार्षिकी नग
पक्षे सुश्यामा अतिकृष्णा सर्पाद्यन्वितत्वात्
॥ पुनः किंभूता चंदनवती चंदनोपलिप्तांगा।
॥ पक्षे चंदनवृक्षयुक्ता मंडिता॥ ५९॥ यथेति
एकस्मिन्नर्थे अयं मे मम वकुलद्रुमः यथा सत्प्र
सवः सुपुष्पः स्निग्धः सततच्छायः सन्मार्गे चतुष्प
थि विहितावस्थितिर्येन सः सर्वाश्रयः वर्तते पक्षे व
वयोरैक्यात् द्वितीयेऽर्थे अयमेव कुलद्रुमः इ
त्यत्राय मित्यस्मादनुस्वारस्त्याज्यः तदायमेव
कुलद्रुम इति स्थिते अयं पुमान् कुलेद्रुम इव।

विरुतैस्स्वागतानीवनीरवाहाः प्रकुर्वते ६१ अग ।
स्त्यस्य मुनेश्शापाद्ब्रह्मस्पन्दनमाश्रितः । महासुःखा
त्परिभ्रष्टोनहुषस्सर्पतां गतः ६२ विसर्गच्युतक
जातिः । महानपिसुधीरोपि वहुरत्नयुतोपिसन् ।
विरसः कुपरीवारो नदीनः केनसेव्यते ॥ ६३ ॥ ।
सुशीलस्स्वर्णगौराभः पूर्णचन्द्रनिभाननः । सुग
तः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥ ६४ ॥
अक्षरच्युतकजातिः ७ ॥ ७ ॥

सम्प्रसवः सुसंतानः पुनः स्निग्धः प्रीतियुक्तः पुनः
सन्मार्गः शास्त्रावबोधितकारी पुनः सर्वेषामाश्रयः
प्रतिपालक इत्यर्थः बिंदुच्युतकं ॥ ६० ॥ विसर्ग
च्युतकस्योदाहरणद्वयं पद्याभ्यामाह महीरुहा इति
महीरुहाः वृक्षा नीरवाहा यमेघा यस्वागतानीव कु
र्वते ॥ कैः विहंगानां पक्षिणां हृद्यैर्मधुरैर्विरुतैः श
ब्दैः विसर्गच्युतके कृते पर्थोनगच्छति हृद्यैकला
पिनां हृद्यं हृदयंगमम् एकं कलापि तु शीलं येषां ते तथा
तेषां ॥ ६१ ॥ अगस्त्यस्येति ब्रह्मस्पंदनं ब्राह्मण
कलितरथमास्थितं आसीनो नहुषो नृपः अगस्त्य
स्य मुनेः शापात् खात् परिभ्रष्टः आकाशात्पतितः
सर्पभावं प्राप्तः कीदृशः महासुः महांतोऽसवः प्रा
णा यस्य सः महासु रित्यत्र विसर्गच्युतके पर्थों नग
च्छति महासुखात् महदैश्वर्यात् च्युत इत्यर्थः ६२

तनोतु नेयस्य फणी गहन्सान्पाशोमुरारिर्दयिता चशय्या। नाभ्यांस्फुरन्भद्रमसुभ्रदेहः पद्माग निश्चक्रमसौ विरिञ्चिः ॥ ६५॥ हरः स्वयीनापुभ करस्सुरेशश्शान्तोहरिर्गोत्ररिपुर्विवस्वान् चन्द्रो द्विजिह्वश्चिनइत्युपेक्ष्य लक्ष्म्याहृतः पातु विधिर्जगन्ति॥ ६६ ॥ स्थानच्युतक जातिः ॥ भिक्षवो हृचिरास्स्वैसुरसाश्वजनप्रियाः। स्पमाया मतिसम्पन्नाहृश्यन्तेमगधेपरम् ॥ ६७॥ सत्य शीलो दयोपेतो दाताशुचिरमत्सरः।

इति विसर्गच्युतकम्। अक्षरच्युतकस्योदाहरणद्वयंद्वाभ्यामाह महानिति महानपि महतामुपमानपात्रभूतोपि सुधीरोपि अक्षोभ्योपि रत्नाकरोपि विरसः क्षारः कुत्सितानकादयः। परिवारा यस्यसः नदीनः समुद्रः के नसेव्यते। नकेनापीत्यर्थः पक्षेनकारच्युतकात् दीनः कृपणः सुधीरो धृतिमानपि वहुगुणरत्नयुतोपि एवंविधोदुःखितः केनापि नसेव्यत इत्यर्थः सुशील इति॥ सुगतो बुद्धः पक्षेगकारच्युतकात्सुनः पुत्रः अक्षरच्युतकम् ६४ ॥ तस्थानच्युतकस्योदाहरणद्वयं द्वाभ्यामाह तनोत्विति अस्सौ मुरारिर्विष्णुः नोस्माकं भद्रं कल्याणं तनोतु असावितिकः यस्यशय्याशे

जिनस्सर्वोत्मनासेव्यः परमुक्तेरभीप्सता॥ ६८
व्यञ्जनच्युतकजातिः।स्फोटयित्वाक्षरंकिञ्चि
त्पुनरन्यस्यदानतः।यत्रापरोभवेदर्थश्च्युतदा
त्तासंहितत्॥ ६९॥ सदागनिहतोच्छाय
स्तमसोवशतांगतः।अस्तमेष्यतिदीनोयंवि
धुरेकश्शिवेस्थितः॥७०॥ पूर्णचन्द्रमुखीस्याक

यनेफणीशेषः यस्यगतिर्गमनंगरुत्मान् यस्यपा
रोगोहस्तेचक्रंयस्यदयिता पद्मालक्ष्मीः यस्य ना
भ्यांस्फुरद्विरंचिः ब्रह्माकीदृशोमुरारिः असुभ्रदे
हः श्यामतनुः ६५ हरइति॥ हरोमहेशोद्विजि
ह्वःश्रितः चन्द्रः स्मयी विवस्वान्सूर्यः ताप
करः सुरेशः इंद्रः गोत्ररिपुः गोत्रशब्दोत्रपर्व
तवाचीविधिर्ब्रह्माशांतः इतितत्रतत्रदूषणा
नुपेक्ष्यज्ञात्वावन्तिकविः लक्ष्माहतोहरिर्जी
यतिपातुरक्षत्विसर्थः॥ इत्युपेक्ष्येनिपातेइ
तिहेतोस्तान्विहायेत्यर्थः॥ स्थानच्युतकंश्लो
कद्वये नोक्तं॥ ६६॥ व्यंजनच्युतकस्योदाहर
णद्वयंद्वाभ्यामाह॥ भिक्षवइति॥ भिक्षवः
संन्यासिनः मागधेमगधदेशेपरमत्यर्थंक्षमा
यांतितिक्षायामभिसंपन्नादृश्यंते पक्षेभकार
च्युतकात्इक्षवः इक्षुदंडाः मागधेक्षमायां
पृथिव्यामभिहृद्याद्दृश्यंतेऽन्यत्स्पष्टं॥ ६७ ॥

मिनीनिर्मलाम्बरा। करोतिकस्यनस्वान्तमेका।
न्तमदनोन्तरम्॥७१॥ इतिच्युतदत्ताक्षरजा
तिः॥ कोनिर्दग्धस्त्रिपुररिपुणाकश्चकर्णस्यहं
तानद्याः कूलंविघटयतिकः कःपरस्त्रीरतः।
श्च॥ कःसन्नद्धोभवतिसमरेभूषणंकिंकुचा।
नांकिंदुःसंगाद्भवतिमहतांमानपूजापहारः
॥७२॥

सत्येनिद्धः पदमभी प्सतापुरुषेणजिनोवुद्धःस।
र्वात्मनासेव्यः पक्षेजिनइत्यत्रजकारच्युतेइनःसू
र्यः स्वामीवा सर्वात्मनाकायवाङ्मनोभिः सेव्यउपा
स्यः इनःसूर्येप्रभावित्यमरः सत्यशीलः सत्यस्वभा
वः दयायुक्तः दाताभयः शुचिरनघःसमत्सरः
सर्वभूतहितेरतइत्यर्थः॥६८॥ व्यंजनच्युतकं॥ च्यु
तदत्ताक्षरस्यलक्षणमाह स्फोटयित्वेतियत्रप्र
श्नेकिंचिदक्षरं किंचिदित्युक्ते व्यंजनंनतुस्वरमित्य
र्थः स्फोटयित्वानिष्कास्यपुनरन्यस्यदानतोनिक्षे।
पादपरोप्यर्थोभवेत्तच्युतदत्ताक्षरसंज्ञंज्ञेयं ६९॥
अस्योदाहरणमाह सदेति अयंदीनोजनः अ
स्तमेष्यतिनाशंप्राप्स्यति कीदृश * * *।
॥ * ॥ * ॥ * * * ॥ * ॥

स्तमसोमोहस्यवशतांप्राप्तः विधुरेकष्टेकः शिवं
कल्याणंस्थितोनकोपीत्यर्थः दीनइत्यत्रनकारंस्फो
टयित्वापकारेदत्ते दीपोस्तंनिर्वाणमेष्यति सदाग

केभूषयंतिस्तनमंडलानिकीदृश्युमाचंद्रम
सःकृतःश्रीः॥ किमाह सीतादशकंठनीता।
हारामहादेवरतानमात ७३ किंभूषणं वा
मृगलोचनानांकासुंदरीयोवनभारखिन्ना धा
तालिपिंवाविद धातिकुत्रसिंदूरविंदुर्विधवा।
ललाटे॥७४॥
तिनावायुनाहतः उच्छ्रायओनत्यंयस्यसः दीन
पक्षेसदागत्यानित्यगमनेनहतःउच्छ्रायोमह।
त्वंयस्यसः पुनःकथंभूतः तमसोंधकारस्यवशतां
गतः दीनपक्षेतमसोदरिद्रस्य सकोविधुः चंद्रः
शिवेशंभौस्थितः पक्षेविधुर आपदिसत्सोकः।
शिवेस्थितः सुस्थितोभवतीत्यर्थः॥७०॥ ॥
उदाहरणांतरमाह पूर्णचंद्रमुखीति॥ कामि
नीकस्यस्वांतमानसंसुकांतमदनोत्तरंकामतर
लंनकरोतिअपितुसर्वस्यैवनिपतंसहर्षंकरो
तिपक्षेकामि नीत्यत्राद्यक्षरककारंदूरीकृत्यपु
नस्तत्रयकारंदत्वायामिनीतिभवति॥ रजनी
यामिनीत्यमरः॥ किंभूताकामिनीपूर्णचंद्रव।
न्मुखंयस्याःसा।पुनःकीदृशीरम्यारमणीया॥
पुनरपिकथंभूता।निर्मलाशुभ्रावस्त्राः। पक्षे।नि
र्मलगगना।अंबरंवाससीव्योम्निइत्यमरः॥
च्युतदत्ताक्षरं॥७१॥ कोनिर्दग्धइति॥ अंत
र्लापिकेयं॥ पूर्वमानपूजापहारः इत्यस्याद्यमे

अंगलग्नमपिकिल्बिषेतरंपूर्वसंचितमपाक॥
रोतिकिं ॥ सन्निधिसमधिगम्यभूभृतांकःपरो
पकरणोकृतोद्यमः ॥ ७५॥ अजारजः ॥
केदारेकीदृशोमार्गः कुत्रशेतेजनार्दनः ॥का
मिनीरमतेकुत्रस्वामीकिंवक्तिचेटिकाम् ॥७६॥
उपरिपाथसिनरे ॥ इतिधर्मदासविरचितेविद
ग्धमुखमंडनकाव्येचतुर्थःपरिछेदःसमाप्तः।
शुभमस्तु ॥ ७ ॥ ७ ॥ ७ ॥

केकमक्षरंअंत्यंतुनदेवताभ्यामक्षराभ्यांउत्तरा
णिभवंति-पुनःसमग्रं॥ ७२ ॥ स्तनमंडलानि
केभूषयंति ॥ हाराः॥उमाकीदृशी।महादेवरता॥
चंद्रमसःश्रीःकुतः॥नमतः॥दशकंठभीतासी।
ताकिमाह।समग्रं॥७३॥ मृगलोचनानांभूषणं
किं।सिंदूरविंदु॥यौवनभाररिवन्नासुंदरीका ॥ वि
धवा॥ धाताकुत्रलिपिंविदधाति-प्र-ललाटे ७४
अंगलग्नमपिशरीरस्पृष्टमपिपूर्वसंचितंभवान्त
रेऽर्जितंकिल्बिषेतरंपुण्यंकिंअपाकरोतिदूरीक
रोति-प्र-अजारजः छागपांसुः भूभृतांराज्ञांस
न्निधिंसमीपदेश न धिगम्यप्राप्यपरोपकरणे।
कः॥उद्यतोभवति-प्रत्यु-अजारजः।जाराज्जातोजा
रजः नजारजः। अजारजः पुरुषःपरोपकरणेक्ष
मोभवेत्॥ ७५॥ केदारेति-केदारेकीदृशोमार्गः

वद उपरि· जाद्रार्दनः कुत्र शेते· पाथसि· जले। कामिनी कुत्ररमते· नरे॥ स्वामी चेटिकां किंवक्ति· उपरिपाथसिनरे॥ श्रीः॥ ७६॥ इतिनारायणचंद्रकृतायां विद्वन्मनोहराख्यायां टीकायां सरहस्यः चतुर्थः परिच्छेदः समाप्तिम गमत्। ॥

वाराणसीप्रसादस्यनियोगेनतुयत्नतः॥ काशीसंस्कृतमुद्रायामङ्कितोयंविचक्षणैः॥ १॥ काश्यां त्रिपुरभैरवीसन्निधौश्री ३ युतबाबूसाहबबाबूफतहनारायणसिंहजीत्यभिधायुजोनिकेतनेकाशीसंस्कृतमुद्रायन्त्रे ऽङ्कितम्॥ सम्वत् १९२३।

